# काश्यपमुनिकथिता

# काक्ष्यपीयकृषिसूक्तिः[1]

धान्यादिकृषिक्रमकथन

शाकादिकृषिक्रमकथन

भोज्याभोज्यक्रमकथन

विविध हव्य निवेदन क्रमकथनात्मक

भाग चतुष्क गुंभिता

( मूलमात्रम् )

१. तत्र शाखोपदेशक्रमः -

काश्यपउपदिशति -

धर्मवित् क्षत्रियो राजा प्रजारक्षा धुरं धरः । दण्डयित्वाथ दण्ड्यांस्तु सत्यं धर्मं च सर्वतः ॥१॥

स्थापयित्वा विशेषेण वर्णाश्रमरतानपि । प्रजाः सुप्तकृतिः काले पोषयेत् देवतुष्टये ॥२॥

देवाश्च यक्षगन्धवोः पितरो मुनयश्च ये । ये चान्ये मखहोमादिक्रियाहोः संप्रकीर्तिता ॥३॥ [2,3]

---

1 श्य  2 र्वा  3 र्हा

तत्प्रीणनं तु यजनैः देवयज्ञं विदुर्बुधाः । प्रजानामतिथीनां च प्रीणन् भोजनादिभिः ॥४॥ 1
धेन्वादिप्रीणनं काल्यं भूतयज्ञं प्रकीर्तितम् । ऋषियज्ञादयो ये च निर्दिष्टा मुनिभिः क्रमात् ॥५॥
वेदविद्या दानजपादानैस्तत्प्रीणनं मतम् । अतो यज्ञेषु सर्वेषु देवयज्ञः प्रधानकः ॥६॥ 2
द्वितीयो भूतयज्ञस्तु तन्निदानं मत् मम । तस्मात्सर्वेषु देशेषु भूमीशो रक्षणव्रती ॥७॥ 3
देवयज्ञं भूतयज्ञं द्वयमेव प्रपालयेत् । शुद्धद्रव्यैर्देवयज्ञः सफलः कथितो बुधैः ॥८॥
तदर्हद्रव्यमाद्यं तु सस्यादिः परिकीर्तितः । सस्योदयफला भूमिः घृता वाराहरूपिणा ॥९॥ 4
विष्णुना भूष्णुना पूर्वं पातालजलपाततः । संप्रार्थितस्तया देव्या देवः शार्ङ्गी परः पुमान् ॥१०॥ 10
हर्षेण भूम्या माहात्म्यवदत्सुरसन्निधौ । रत्नादिधारणात् गर्भे रत्नगर्भा वसुंधरा ॥११॥ 5
धान्यादीनामोषधीनां जलाना प्रस्नवादपि । धरा तु मेदिनो ख्याता प्राणिनां प्राणवर्धिनी ॥१२॥ 6,7
द्विपदा ये चतुष्पादाश्चाण्डजा विविधास्तु ये । ते सर्वे प्राणिवर्गास्तु मेदिन्याः सारवैभवात् ॥१३॥
प्राप्तसत्वाः प्राणधराः जीविनो निश्चिता भुवि । पन्नगानां तथान्येषां द्विपदां च चतुष्पदाम् ॥१४॥
भरणात् प्राणदानाच्च देवप्रीतिश्च शाश्वती । सत्य धर्मा-चरणकं चतुर्वर्ग फलात्मकम् ॥१५॥
ततः सृष्टिस्तु सफला तेन मोदति सृष्टिकृत् ॥ अतः सस्यं धरा प्राणाः धराया वृत्तिरुत्तमा ॥१६॥ 8
माङ्गल्यसूत्रं च तथा सस्यमाहुर्दिवौकसः । सस्यादिरेव मेदिन्याः जीवनाडी कलात्मिका ॥१७॥

1 नं 2 त्प्री 3 तं 4 धृ 5 त्म्यमव 6 नां 7 नी 8 त्

सस्यादिरेव मेदिन्याः परोधर्मः परं यशः । सस्यपूर्णा वसुमती प्राणिनां प्राणवर्धिनी ॥१८॥

सर्वमङ्गलदात्री च देवानां तुष्टिदायिनी । नित्यसस्या च मधुरजलस्रावा विशेषतः ॥१९॥

शोभते सर्वतः पृथ्वी विष्णोराज्ञावलम्बिनी । विष्णुना पालिता भूमिः जननी प्राणसन्ततेः ॥२०॥

पोषयित्री चाद्यमाता पुष्टिदा तुष्टिदा तथा । रत्नगर्भा परं नित्यं सर्वरक्षणकारिणी ॥२१॥ ॥21॥

पर्वतोत्तुङ्गवक्षोजा पयोधिरशना तथा । समुद्रमुक्ताभूषाढ्या देवी राजति शार्ङ्गिणः ॥२२॥

सुर्यचन्द्ग्निदीपेयं मन्दमारुतवीजना । विशालवनसंचारा पृथिवी विष्णुवल्लभा ॥२३॥ 1, 2

सर्वंसहा राजतेऽत्र दिक्चक्ररचितस्थितिः । तामेतां वसुधां कृत्स्नां कृषियोग्यस्थलो-
ज्ज्वलाम् ॥२४॥

नानादेशेषु विभजेत् नानाकारां महीपतिः ॥

## २. गिरिनदीनदवनसार क्षेत्रादिभेदेन सस्यार्हभूमिविभजनक्रमकथनम्

काव्यप उपदिशति - 3

पयोधिसंवृता भूमिरियमासृष्टिसर्वतः । ब्रह्मणा तु विधात्रासा निर्मिता हि समस्थला ॥२५॥

फलप्रदात्री विविधा कल्पेषु विविधेष्वपि । श्लाधिता देवगन्धर्वमुनिभूपालवृन्दकैः ॥२६॥

प्राप्तसत्त्वफला भूमिः प्रतिकल्पं च भाविता । क्वचिन्निमग्ना वाराशिजलपूरेषु भूरियम् ॥२७॥

---

1 सू 2 न्द्रा 3 श्य

क्वचित् तथा समुद्रेण व्यक्तस्वान्तप्रदेशका। क्वचिन्निर्भिष्णनाडीच कालभेदेन कल्पत:॥२८॥ 1

सारासारस्त्रवयुता निम्ना चोन्नतरूपिणी। गिरिभिः संविभक्ताच नदीभिश्च क्वचित्स्थले॥२९॥

नदेन सारभूम्या च हृदेन महतापि च। क्वचित् शर्करस्रूपा च क्वचिदल्युष्णरूपिणी॥३०॥ 30 2

क्वचित् जलविहीना च जातेयं वसुधा क्रमात्। क्वचिदूषररूपा च क्वचित् बीजविनाशिनी॥३१॥ 3

एवं बहुविधा जाता मेदिनीयं प्रकीर्तिता। अतो महीपतिः सर्वप्राणिपालन दीक्षितः ॥३२॥

सस्याभिवृद्दये भूमिं परिक्षेत सुलक्षणाम्। अस्थिपाषाणखण्डाद्यैः हीनां मृदुलमृत्तिकाम्॥३३॥ 4, 5

सुस्निग्धामल्परक्तां च कृष्णवर्णां तथैव च। तुषकाचविहीनां च सारां रससमुज्ज्वलाम्॥३४॥

न श्वभ्रयुक्तां नागाधां नोत्तुङ्गां च समस्थलाम्। मल्लिकाजातिकुटजसुरागन्धसमुज्ज्वलाम्॥३५॥

अथवा पद्मखर्जूरतिनिशप्रसवक्रमाम्। अपीतसलिलां शश्वत् पीतोदकजलामपि॥३६॥

बीजवृद्धिकरीं वेगात् सीतासौख्यप्रदायिनीम्। वृषफेनाक्तकां वापि सत्वजन्तुसमन्विताम्॥३७॥

अकण्टकां करीषादिहीनां च निविडां घनाम्। तोलनेऽधिक भाराढ्यामोषधीवृद्धिदामपि॥३८॥

ब्राह्मणक्ष्मां क्षत्रभूमिं वैश्यभूमिं तथैव च। शूद्रभूमिं क्वचिद्देशे संकीर्ण गुण भूमि काम्॥३९॥

एवं पञ्चविधां जात्या विभक्तां विमलोदकाम्। अन्तःसारयुतां बाह्यसारामपि चकल्पकीम्॥४०॥ 40

नयनानन्दजननीं वल्मीकादिविवर्जिताम्। दुष्टसत्वविहीनां च सत्वपक्षिनिवेशिनीम्॥४१॥

वातवेगेन्त वात्या वा वह्निवेगेन वा पुनः। अपीतसलिलामन्तर्निष्कुटोद्यानवृद्धिदाम्॥४२॥ 6

---

1 न्न 2 ~ह 3 त् 4 स्या 5 री 6 न

प्रच्छायभूरुहां वृद्धिदायिनीं मल्पनिम्नकाम् । नाना बीजावली वृद्धि करिणीं च मुहुर्मुहुः ॥४३॥ 1

मृदुस्पर्शा च नितरां गोप्रियां गोधनप्रियाम् । शुभलक्षणसंयुक्तामल्पदोषामपि क्वचित् ॥४४॥

सुलभोदकनिस्त्रावां सुलभस्वीकृतोदकाम् । एवं लक्षणसंयुक्तखल भूमिवृतां क्वचित् ॥४५॥

वसुधां भूपतिर्वीक्ष्य गृह्णीयादुत्तमामिह । भूपरीक्षाक्रमविदो गुणाढ्या नृपचोदिताः ॥४६॥

ब्राह्मणाः क्षत्रिया वापि विशः शूद्रास्तु वा पुनः । दगार्गलप्रमाणज्ञाः कृषिशास्त्रविशारदाः ॥४७॥

परिक्षयेयुः भूमिं तु शुभे शुभनिमित्तके । स्नातः शुचिः शुद्धवासाः धृतस्वणोङ्गुलीपकः ॥४८॥ 2 3

निर्दिष्टां भूमिमासाद्य कुर्यात् तत्र प्रदक्षिणम् । सह मङ्गलघोषेषु स्वस्तिवाकोन कोविदः ॥४९॥ 4 a

सायंकालेऽथवा प्रातः ब्राह्मणैर्वेदपारगैः । पञ्चगव्येन शुद्धेन सलिलेनाथवा पुनः ॥५०॥ 50।

खनित्रेणापि तुलया टंकयापि क्वचित् बुधः । भूमिं परिक्षयेत् खात्वा निरीक्ष्य च मुहुर्मुहुः ॥५१॥ 5

आघ्राय पीत्वा च मृदं तोलयित्वापि वा क्वचित् । क्षिप्त्वा पात्रस्थसलिले घटिकावधि कोविदः ॥५२॥

वर्णबिन्दुरसस्रावैः विद्यात् भूम्याश्च लक्षणम् । समवर्णा समच्छाया घना स्निग्धा च भूरपि ॥५३॥

देवानामपि भूपानां प्रशस्ता मुनिनिश्चिता । ब्राह्मणानां विशां चापि क्षेमदा वृद्धिदायिनी ॥५४॥

शुभलक्षणसंयुक्ता सर्वेषां शुभदा धरा । कुटुम्बारोग्यदा शश्वत् धनगोधान्यवृद्धिदा ॥५५॥

निर्दिशेदुत्तमां भूमिं मध्यमामपि वा क्वचित् । अधमां वर्जयेत् यत्नात् भूमिलक्षणपण्डितः ॥५६॥

कृषियोग्या भूमिरियमुद्यानायेयमादृता । वनाय भूरियं प्रोक्ता जलाधाराय निश्चिता ॥५७॥

---

1 का 2 री 3 र्णा 4 ण 5 री a क्ये

इयं भूमिरिति प्रोक्ता चतुर्थी च स्वभावतः । इति भूमिं शुभे काले निर्दिशेच्च नृपाज्ञया ॥५८॥
सीमास्थलविभागश्च कर्तव्यो भूमिमिच्छता । ग्रामेष्वपि च देशेषु दुर्गेषु नगरेष्वपि ॥५९॥
प्रासादान्तस्तु वा भूमिं कृष्युद्यानादियोग्यकाम् । निर्दिशेन्मतिमान् युक्त्या नानाक्षेत्रस्वरूपवित्[1] ॥६०॥ ॥60॥
जलस्वरूपवित् प्राज्ञः प्राणिनां सुखसिद्धये ।[2]

## ३. भूम्यां जलाधारस्थापनक्रमकथनम् ॥

काश्यप उपदिशति -

प्रमाणज्ञैः शिल्पिवर्यैः शास्त्रपारंगतैर्नृपः । कारयेत् ग्रामनिर्माणं दुर्गाणां च पुरामपि ॥६१॥
वनमध्ये नदीतीरे गिरिसानुतटेऽथवा । स्वदेशेष्वपि राष्ट्रेषु तत्रतत्र विशेषतः ॥६२॥
आभीरपल्लीं घोषं च व्रजं वा गोधनाश्रितम् । तथा क्षुद्रग्रामजालं स्थापयेत् सुमुहूर्तके ॥६३॥
वापीकूपसमायुक्तमुद्यानादिविभूषितम् । सस्यक्षेत्रावृतं कार्यं नियमेन महीपतिः ॥६४॥
ग्रामाणां नगराणां च पुराणामपि सारभूः । सस्याहो कथिता प्राणः जीवनं चोत्तमं तथा ॥६५॥
प्राणनाडीति गार्ग्यश्च प्रोवाच वदतां वरः । सस्याहक्षेत्रसंयोगादेव सर्वत्र शाश्वतम् ॥६६॥
ग्रामादिनिर्माणफलं कथितं मुनिपुङ्गवैः । प्राणिरक्षा च नितरां पुरुषार्थफलं तथा ॥६७॥

1 रू 2 रू

देवतुष्टिर्यज्ञफलं सृष्टेश्च फलमुत्तमम्। सजीवस्य हि लोकस्य प्राणरक्षाकरी भृशम् ॥६८॥

सारभूरिति निर्दिष्टा जीवानां फलमुत्तमम्। अतः सुलक्षणोपेतां दोषहीना महीपतिः ॥६९॥ 1

अथवा स्वल्पदोषां तु निर्दिशेत् तत्रतत्र तु। विभक्तां ग्राममार्गेण पुरमार्गेण वा क्वचित् ॥७०॥ ॥70॥

महामार्गेण वा देशे विभजेद्भूमिमुत्तमाम्। ग्रामाणां नगराणां च पश्चिमे भाग उत्तमे ॥७१॥

उदीच्यामथवा प्राच्यां दक्षिणस्यां तथा क्वचित्। जलाशयं स्थापयेत्तु भूमिस्थित्यनुसारतः ॥७२॥

गभीरं परिधाक्त्तु धनुराकारभासुरम्। दीर्घं क्वचित् वर्तुलं वागाघं तु सलिलाशयम् ॥७३॥ 2, 3, 4

दृढप्रणालिकासेतुमार्गेण च सुरक्षितम्। उत्तुङ्गतटकल्पाढ्यमथो मार्गेण संयुतम् ॥७४॥

जलागमनमार्गेण शोभितं च विशेषतः। अतो गिरेः समीपे वा चोत्तुङ्गे भूतलेऽथवा ॥७५॥

महाहूदेन संयुक्ते स्थापयेत्तु जलाशयम्। महाजलस्थैर्यभाजं जलाधारे तु भूतले ॥७६॥ 5, 6

सारक्षेत्रे स्थापयेत्तु स्वयं स्त्रावयुतेऽपि वा। सैकतादिविहीने तु पाषाणादिविवर्जिते ॥७७॥

जलाशयं तु गंभीरं जलपूरार्गलायुतम्। तथा तं स्थापयेद्विद्वान जलपूर्णे जलाशये ॥७८॥ 7

येन वा न विरोधः स्यात् ग्रामादेर्नगरस्य च। प्राकारोद्यानदुर्गाणां खलक्षेत्रस्य वा पुनः ॥७९॥

जलभीतिः प्रवाहाद्यैः न स्यात्सर्वत्र भूमिपः। तथा तं स्थापयेत् देशे परिक्षेत क्रमादिमम् ॥८०॥ ॥80॥ 8

मासक्रमेग वा वर्षक्रमेण च मुहुर्मुहुः। स्थापयेन्नृपतिस्तत्र तटरक्षणकारिणः ॥८१॥

वर्षाकाले विशेषेण कुल्यादीनां शतं तथा। वापीनां दीर्घिकाणां च रक्षागं क्षेमदं मतम् ॥८२॥

---

1 नां 2 यु 3 क्तं 4 धं 5 ~ह 6 रं 7 न् 8 री

जलाशये तु सलिलपूर्णे संरक्षिते क्रमात्। सस्यादिवृद्धिस्तत्रैव निश्चितः सुखदायकः ॥८३॥ 1, 2

रोगहानिर्वह्निभयहानिश्च सुखमुत्तमम्। पोषणं रक्षणं शस्तं द्विपदां च चतुष्पदाम् ॥८४॥

विहंगमानामपि च सर्पादीनां च सर्वतः। सुखं तु परमं चोक्तं न व्याधिश्च भवेत् ध्रुवम् ॥८५॥

पानद्रव्यं तु सलिलं द्विपदां च चतुष्पदाम्। विहङ्गमानामपि च सर्पादीनां च सर्वतः ॥८६॥

सुखं तु परमं चोक्तं न व्याधिश्च भवेद् ध्रुवम्। पानद्रव्यं तु सलिलं द्विपदां च चतुष्पदाम् ॥८७॥

एकमेव हि निर्दिष्ट ब्रम्हणा सृजता प्रजाः। महोदकस्थानमेषः जलाशय उदीरितः ॥८८॥ 3

अतः सर्वप्रयत्नेन प्रजारक्षाधुरंधरः। स्थापयेत् रक्षयेद्राजा जलाशयमिमं क्रमात् ॥८९॥

जलाशयद्वयं भूपः क्वचिदेकं जलाशयम्। सारक्षेत्रानुसरणं स्थापयेत् ग्रामयोग्यकम् ॥९०॥

गिरिप्रस्त्रवणोपेतं महाहूदयुतं तथा। वननिम्नगया युक्त महानिम्नगया क्वचित् ॥९१॥ ॥91॥ 4

देशेदेशे विशेषेण ग्रामाणां च पुरामपि। जलव्ययस्थानयुतं कल्पयेत् युक्तितः क्रमात् ॥९२॥

जलाशयतटे भूपः वृक्षांश्च परिवर्धयेत्। वेतसं च वटं तत्र कोलकन्दावलिं क्वचित् ॥९३॥

प्लक्षमश्वत्थकं चैव खदिरं खादिरं तथा। तिन्दुकं तिन्त्रिणीं वापि भूर्जरं चापि वेणुकम् ॥९४॥

निम्बं कदम्बमपि च ये च सारद्रुमा मताः। तांस्तु वृक्षान् महीपालः यत्नेनाहृत्य कालतः ॥९५॥

जलाशयतटे युक्त्या स्थापयेत् क्षेमसिद्दये। तटस्य निम्नभूम्यां वा तत्कुल्यायाश्च निर्गमे ॥९६॥

स्नानघट्टाविरोधेन पानघट्टार्हकं क्वचित्। वृक्षांश्च वर्धयेत् युक्त्या तत्रतत्र विशेषतः ॥९७॥

---

1 ता 2 का 3 ष्टं 4 न्ह

खलभूम्यां तथा वृक्षान् वटादीन् सुखदायिनः । तटाकदीर्घिकातीरे हृदादीनां तटे तथा ॥९८॥ 1

प्रच्छाय वृक्षान् भूपालः वर्धयेत् क्रमतस्तथा । आक्रीडेष्वपि चोद्यानेष्वेवं विश्रांतिभूमिके ॥९९॥ 2

महामार्गस्थले तत्र जलाशयसमीपतः ।वातप्रोतप्रसवकान् प्राणिनां श्रमहारिणः ॥१००॥ ॥100॥

वनभोजनयोग्येषु स्थानेषु विविधेष्वपि । देवालयोद्यानतले भूपालोद्यानके तथा ॥१०१॥

मुनीनामुटजानां च तले तत्र विशेषतः । सेनानिवेशस्थाने च भूपविश्रान्तिकस्थले ॥१०२॥

यज्ञार्हस्थलके चापि बल्यर्हस्थानकेऽपिच । प्रच्छाय वृक्षान् भूपालः वर्धयेत् क्रमशस्तथा ॥१०३॥ 3

विहङ्गमाल्हादकरान् फलपुष्पादिदायिनः । तथा व्याधिप्रशमकान् शीतलान् कोमलान् तरुन् ॥१०४॥ 4

अकण्टकांश्च पनसानाम्रांश्चापि रसालकान् । पुन्नागमालतीकुन्दचम्पकावलिमप्यथ ॥१०५॥

स्थापयेदावरणके तत्रतत्र विशेषतः । जलाशयजलस्रावात् वर्धयेच्च क्रमात्तरुन ॥१०६॥ 5

जलाशयविहीने तु सुखं नैवोपजायते । न सान्ध्यकर्म न स्नानं वृक्षाणामपि वर्धनम् ॥१०७॥

न स्यादित्येव मुनिभिः सौख्यं त्विति विनिश्चितम् । अतः सर्वप्रयत्नेन भूपालो रक्षणव्रती ॥१०८॥

ग्रामेष्वपिच देशेषु वनमध्ये तु वा पुनः । स्थापयित्वा तु गम्भीरं जलाशयमतंद्रितः ॥१०९॥

कुल्यां दृढतरां नित्यं सुलभोदकनिःस्रवाम् । नानाशाखासमाक्रान्तां महाकुल्यायुतां तथा

॥११०॥ ॥110॥

जलाशयेन सहितां स्थापयेत् बहुशो दृढाम् ।

---

1 न्ह 2 यवृ 3 यवृ 4 रू 5 रू

४. अथ नदीमातृककुल्याकूपादिक्रमकथनम् ॥

काश्यप उपदिशति -

यत्र सस्यक्षितेः कुल्या जलधारोऽपि वा क्वचित् । न कल्पिता वा न स्थाप्या सततोदकपूरिता ॥१११॥
तत्र कुल्या नदीमातृमुखा स्थाप्येति निश्चिता । तच्चतुर्विधमाख्यातं कृषिपद्धतिकोविदैः ॥११२॥
आद्या नदीमातृका स्यात् कुल्या चाथ हृदाश्रिता । जलाशयाश्रिता वापि महीध्रभृगुपार्श्वभाक् ॥११३॥ 1 2
कुल्या चतुर्विद्या ह्येवं स्थाप्या देशप्रमाणतः । यत्रोर्ध्वभागे नद्यादिः दृश्यते भूस्वभावतः ॥११४॥ 3
तत्र नद्या मुखं कार्यं स्वतः प्रस्राव भासुरम् । कृषियोग्यं स्थलं यत्र विद्यते देश भुमिषु ॥११५॥ 4
प्रायस्तदूर्ध्वके भागे दूरे वा दूरतोऽपि वा । कुल्या धारः प्रकर्तव्यः कृषिकार्यविचक्षणैः ॥११६॥
प्राक्गामिन्यां निम्नगायां कुल्यारम्भं क्वचित्स्थले । तथा पश्चिमगामिन्यां कुल्यां संपरिकल्पयेत् ॥११७॥
हरिदन्तरगामिन्यामथवा तां प्रकल्पयेत् । कोणान्तर प्रवेशिन्यामापगायामपि क्वचित् ॥११८॥
क्रमणोत्तुङ्ग भूमिस्तु सर्वत्र हि विशिष्यते । निम्नगा मातृका कुल्या नद्यारब्धा कृतस्थला ॥११९॥
क्रमेण भूमिं विविधामाक्रम्य बहुरुपिकाम् । ग्रामात् ग्राममथाक्रम्य वनादूनतलं तथा ॥१२०॥ ॥120॥ 5
स्वकीयक्षेत्रगां कुर्यात् प्रकृतिक्षेमसिद्धये । चतुर्हस्तः पन्चहस्तः षटहस्तः सप्तहस्तकः ॥१२१॥ 6
दशहस्तकमानं वा कुल्यावैपुल्यमीरितम् । क्वचिन्महाहृदारब्धा कुल्या सा जलपूरिता ॥१२२॥ 7
तथा महोदकनदीतलारब्धा च निश्चिता । स्वक्षेत्रभागावधिकं कुल्यावैशाल्यमुत्तमम् ॥१२३॥

---

1 ह्र 2 ध्र 3 धा 4 भू 5 रू 6 ड् 7 ह्र

तुल्यमेवं हि कल्प्यं तदुन्नतिस्तु स्थलोचिता । सर्वत्रागाधता योज्या जलप्रस्रावयोग्यका ॥ १२४ ॥

महातटाकं तीर्त्वा वा मध्यमार्गे क्वचित् तले । सर्वप्राणिहितायैतां कुल्यां भूपः प्रकल्पयेत् ॥ १२५ ॥

गिरिप्रस्रवणारब्धां कुल्यामपि तले क्वचित् । स्वक्षेत्रगामिनीं कुर्यात् कृषिसंपद्विवृद्धये ॥ १२६ ॥

कुल्यामेकां पूर्णजलां तथा कुल्याद्वयं क्वचित् । कुल्यात्रयं वा क्षेत्राणां हिताय हि विधीयते ॥ १२७ ॥

नदीहीने क्वचित् देशे सैकतस्थल कल्पिता । कुल्यापि च सुखायैषा निश्चिता कृषिकोविदैः ॥ १२८ ॥

संततस्रावसंयुक्ता स्थली सा ग्राववर्जिता । सुक्षेत्रा सुगुणोपेता सस्यक्षेमाय कल्पते ॥ १२९ ॥

हृदारब्धां तु वा कुल्यां नेयात्स्वग्रामसंपदे । उद्यानायापि वा देशे चाक्रीडायापि वा क्वचित् ॥ १३० ॥ ॥130॥ 1

कुल्याप्रकल्पनं युक्त्या जलस्रावसमुज्ज्वलम् । स्नानाय पानाय तथा कृषिकार्याय च क्षितौ ॥ १३१ ॥

निश्चितं मुनिभिः पूर्ववेदिभिः जीवरक्षकम् । क्वचित् देशे भूतलं तु कुल्यानीरं प्रणाशयेत् ॥ १३२ ॥

पाययेत् शोषयेद्वापि स्वान्तर्दोषविदिभिः स्वयम् । अतस्तत् भूतलं वर्ज्यं कुल्यानिर्माणकोविदैः ॥ १३३ ॥ 2

क्वचिदूषरभूमिश्च दृश्यते सर्वतः क्षितौ । सा चापि वर्ज्या कुल्यायै भूदोषाक्रान्तभूरपि ॥ १३४ ॥

अतः सद्गुणसंपन्नं भूतलं वीक्ष्य पार्थिवः । कुल्याप्रकल्पनं देशे स्थापयेत् सस्यसंपदे ॥ १३५ ॥

क्वचित् कुल्याद्वयं योज्यं तथा कुल्यात्र्यं क्वचित् । स्थलानुकूलं सर्वत्र तत्कल्पनमुदीरितम् ॥ १३६ ॥ 3

सर्वासामपि कुल्यानां जलाधारस्थलीषु च । प्रवेशश्च क्रमाल्प्योक्तः शास्त्रविद्भिर्मुनीश्वरैः ॥ १३७ ॥ 4

जलाशयविहीने तु स्थले ग्रामे पुरे तथा । वने वनान्तरे वापि तां कुल्यां क्षेत्रगामिनीम् ॥ १३८ ॥

---

1 ह्र 2 षा 3 त्रयं 4 त्प्रो

प्रकल्पयेत् तथा धीमान् सस्यवृध्यै विशेषतः। तले तत्र क्षुद्रकुल्या शस्यते च फलप्रदा ॥१३९॥ 1

प्राणिनामपि सस्याना जीवनं जीवनं मतम्। अतः सर्वत्र देशेषु पार्थिवः क्षेमसिद्दये ॥१४०॥ ॥140॥ 2

कुल्यां नदीमातृकां वा स्थलान्तरकृतामपि। जलपूर्णां प्रकुर्वीत खातयेत् रक्षयेत्सदा ॥१४१॥

अरक्षिता सा विफला दोषभाक् जलवर्जिता। अतो भूपतिभीः सर्वैः कुल्यारक्षणमुत्तमम् ॥१४२॥ 3

धर्म इत्येव निर्दिष्टमृषिभिस्तत्त्वदर्शिभिः। वषीभ्यश्च तटाकेभ्यः कूपेभ्यश्च विशेषतः ॥१४३॥ 4

जलपोषणमादिष्टं कृषिक्षेमाय भूतले। क्वचित् स्थल्यामूर्ध्वभागे निश्चिता सलिलस्थितीः ॥१४४॥ 5, 6

क्वचित्तु कथिता भूम्यामधोभागे जलस्थितीः। क्वचित्पाषाणमूयिष्ठे जलस्रावस्तु नश्यति ॥१४५॥ 7, 8

मृद्दोषदूषितेऽन्यत्र जलस्रावश्च नश्यति। अतः सैकतभूयिष्ठा जलपूर्णा वसुंधरा ॥१४६॥

वापीकूपादियोग्येति निश्चिता तत्त्वदर्शिभिः। यस्मिन् देशे ग्रीष्मकाले सस्यक्षेत्राय वा पुनः ॥१४७॥

उद्यानायापि वा नीरं न पर्याप्तं हि कुल्यजम्। तस्मिंस्तु देशे सर्वत्र कूपं निर्मापयेन्नृपः ॥१४८॥

क्षुद्रकूपं च कूपं च महाकूपं च वापिकाम्। चतुरश्रं मण्डलं वा दीर्घाकारमथापि वा ॥१४९॥

स्थापयेत् खातयेत्तच्च रक्षयेच्च यथाविधि। उत्तरायणमासेषु प्रायो देशेषु सर्वतः ॥१५०॥ ॥150॥

अधोभागे जलं दृश्यं नद्यामापि तले क्वचित्। तस्मात् कूपादिखननमुत्तरायणमासिके ॥१५१॥

संपूर्णसलिलावाप्तिहेतवे चिरकालिकम्। दगार्गलविधिज्ञेन धीमता भूमिवल्लभः ॥१५२॥

कापीकूपादिखननं सलिलस्थितिमेव च। आदौ निश्चित्य वृक्षाद्यैः भूनाडीवीक्षणादपि ॥१५३॥ 9

---

1 ध्द्यै 2 नां 3 भिः 4 पी 5 त् 6 तिः 7 तिः 8 भू 9 वा

भूमिं परिक्ष्य कलयेत् सुमुहूर्ते सुलग्नके। प्रायः प्रातस्तु खननं शुभाय परिकीर्त्यते ॥१५४॥ 1

अभ्यर्च्य वरुणं नीरजाधं भूदेविकामपि। वनदेवीं तथाभ्यर्च्य बलिदानात् विशेषतः ॥१५५॥ 2

कूपं वापीं दीर्घिकां च स्थापयेत् क्रमतो नृपः। आदौ महावटं खात्वा दीर्घं वा चतुरश्रकम् ॥१५६॥

मण्डलाकारमथवा खातमृत्स्नां तु दूरतः। निक्षिप्य क्रमशस्तत्र जलसंदर्शनावधि ॥१५७॥

मृदुद्दरणमाख्यातं भटैर्वीरैः कृषिवलैः। जलं सैकतसंमिश्रं वीक्ष्य कूपादिषु क्रमात् ॥१५८॥ 3

अधोऽधिष्ठानकल्पस्तु दार्ढ्याय च विधीयते। स्थले सैकतं भूयिष्ठे चेष्टिकाजालकैरपि ॥१५९॥ 4

सुपक्वैरिह चादिष्टमधिष्ठानप्रकल्पनम्। कठिने भूमिभागे तु दीर्घिकाकल्पने क्वचित् ॥१६०॥ ॥160॥

अधिष्ठानमधोभागे शिलाखण्डैः प्रकल्पयेत्। कूपस्याधः स्थले चैवमधिष्ठानं यथाक्रमम् ॥१६१॥

सिकताजलसंमिश्रमृदुद्दरणकार्यतः। दृढीकृत्य क्रमान्नित्यं भूयिष्ठं सलिलं ततः ॥१६२॥

विलोक्य तत्र कूपादावधिष्ठानोपरि क्रमात्। इष्टिकाखण्डकैः काले निर्माणं कल्पयेन्नृपः ॥१६३॥

सुधासंमिश्रितैः कूपनिर्माणं त्विष्टिकादिभिः। चिरकालस्थितिकर माहुस्तत्त्वविदो बुधाः ॥१६४॥

अतः सर्वत्र देशेषु वापीकूपादिकल्पनम्। सुधेष्टिकादिभिः कार्यमिति शास्त्रेषु निश्चितम् ॥१६५॥

अधिष्ठानात् भूतलान्तं प्रत्यहं चेष्टिकादिभिः। प्रकल्पनं प्रकुर्वीत क्वचित् सोपानकल्पनम् ॥१६६॥

मुखद्वारं प्रकुर्वीत शिलाभिः भूतले क्रमात्। प्राच्यां प्रती च्यामथवा स्थलयोग्यं विदुर्बुधाः ॥१६७॥

घटीयन्त्रस्थलं तीरे शिलभिः परिकल्पयेत्। ततः सलिलनिःस्रावहेतवे दृढभूमिके ॥१६८॥ 5

---

1 री 2 थं 3 षी 4 तभू 5 ला

तीरेषु क्षुद्रकुल्यां च स्थापयेत् स्थलयोग्यकम् । घटीयन्त्रं तु विविधं वृषभैर्वाह्यमुत्तमम् ।।१६९।।
दृढशृंखलिकायोगात् हस्तिहस्तादिभिः क्वचित् वाह्यं तु तन्मध्यमं स्यादधमं नरवाह्यकम् ।।१७०।। 170
घटीयन्त्रप्रेरणेन चाधःस्थं सलिलं क्रमात् । कूपादितीरभाक् लोके दृष्टं सर्वत्र सर्वतः ।।१७१।।
तन्नीरं कुल्यकायोगात् सस्यक्षेत्राय शस्यते । कृषिकार्यरतास्तस्मात् धीमन्तः पुरुषा भुवि ।।१७२।।
ब्राम्हणाः क्षत्रिया वैश्याः शूद्राश्चान्येऽपि युक्तितः । घटीयन्त्रप्रयोगेन वापीकूपादिनीरकम् ।।१७३।।
जलाशयस्थं नीरं वा नदीमातृककुल्यगम् । ह्रदोत्थं च जलं शुद्धं जलदोषविवर्जितम् ।।१७४।।
कृषिक्षेत्राय शाकादिस्थानकाय च भूतले । चंपकादिलतास्थल्यामपि नीत्वा यथाक्रमम् ।।१७५।।
कृषिप्रयोजनं लोके प्राप्नुवन्ति यथाविधि । जलाधारस्थलं तस्मादादौ प्राप्य कृषीवलैः ।।१७६।।
कुल्याद्यैरपि कूपाद्यैः ह्रदाद्यैरपि भूतले । जलाशयाद्यैरपि च जलं प्राप्यं हि निश्चितम् ।।१७७।। 1
मेघप्रचारकाले तु वृष्टिः सर्वत्र निश्चिता । दैवयोगान्मुनीद्राणां संकल्पादपि सर्वथा ।।१७८।।
कादम्बिनीभिः काले तु संवृष्टं सलिलं नृपः । जलाशयादिस्थानेषु पूरयेत् क्षेमसिध्दये ।।१७९।।
रक्षयेत् तत्प्रयत्नेन जलमूला कृषिर्मता । अतः सर्वत्र भूपालैरन्यैः पुरुषपुंगवैः ।।१८०।। ।। 180।। 2
ऋतुकाले तु सर्वत्र जलं प्राप्यं प्रयत्नतः । संरक्ष्यमिति च प्रोक्तं काश्यपेन महर्षिणा ।।१८१।।

1 द्यै 2 त्प्र

## ५. कृषिवालानां ग्रामकार्यकराणां च गुणलक्षणकथनम्। कृषिप्रशंसा च ॥ [1] [2] [3]

काश्यय उपदिशति- [4]

कृषिकार्यरता ये तु पुरुषा: ग्रामवासिन: ।दंभासूयादि मुक्ताश्च परस्परहितैषिण: ॥१८२॥ [5]

गोभूमीदेवभक्ताश्च नितरां सत्यवादिन: ।परानुकूल्यनिरता: सन्ततं तुष्टचेतस: ॥१८३॥ [6]

अजातशत्रवो लोके परकार्यप्रयोजना: । चतुष्पाद्वर्गवात्सल्यभूषिता नयकोविदा: ॥१८४॥

गणनाकर्मकुशला: शुद्दा: शौचपरायणा: ।नित्यकर्मरता: काले कृतातिथिसुत्क्रिया: ॥१८५॥ [7]

तंन्द्रालस्यादिहीनाश्च कामक्रोधादिवर्जिता: ।परस्परं स्नेहभाज: साहयकर्मरताश्च ये ॥१८६॥ [8]

ते तूत्तमा: समादिष्टा: पुरुषा: पुण्यदर्शना: ।जलाशयतटादीनां कुल्यादीनां च रक्षका: ॥१८७॥

गोरक्षणैकनिरता: राजविश्वासशालिन: । पुत्रपौत्रादिसंपन्ना: श्वशुरभ्रातृवर्गका: ॥१८८॥

ब्राम्हणा: क्षत्रियावैश्या: शुद्राश्च कृषिजीविन: । संकीर्णवर्णजा ये तु व्याधाद्या ये नरा भुवि ॥१८९॥

आखेटरसिका ये तु ये च गोरक्षका मता: । ये त्वजापालका: ख्याता: ये चान्ये कृषिजीविन: ॥१९०॥ ॥190॥

ते सर्वे मनुजा लोके सर्वदेशेषु सर्वथा । परस्परप्रीतियुक्ता: लोकक्षेमाय दीक्षिता: ॥१९१॥

ग्रामाग्रगण्यै: जात्यग्रगण्यैरेवं नृपाज्ञया । शिक्ष्यस्ववृत्तयो लोकवार्ताभीता: कृपालव: ॥१९२॥ [9]

स्वस्वजीवनरक्षाख्यामखेषु कृतदीक्षका: ।सर्वप्राणिहितायैते कथिता: पुण्यपुरुषा: ॥१९३॥ [10]

तेषु ये ब्राम्हणा: शुद्दा: सत्यधर्मपरायणा: ।कृपालवो नीतिविद: पश्चात्तापादिभूषणा: ॥१९४॥

---

1 षी  2 व  3 गु  4 प  5 दं  6 मि  7 सु स (?)  8 त  9 क्ष्या:  10 पू

यथार्हदण्डकाः सर्वरक्षाकर्मणि दीक्षिताः । नृपालाज्ञापालनोत्काः बहुसद्गुणमण्डिताः ॥१९५॥
ग्रामाधिपतयस्ते तु कर्तव्या भूतिमिच्छता । ग्रामस्यैकस्य वा ते तु ग्रामाणां वा क्वचित् स्थले ॥१९६॥
न्यायान्याय्यक्रमस्थैर्यधर्मस्थापनकारिणः । ते वै कृषिक्रियासाह्यकारिणः संप्रकीर्तिताः ॥१९७॥
भूपालैः क्षत्रियैरेवं धनिकैर्वैश्यकैरपि । कृषिकार्येषु तैः साह्यं कार्यं लोकहिताय हि ॥१९८॥
धर्म्यं यशस्यमायुष्यं कृषिसाह्यमितीरितम् । भूपालैः क्षत्रियैस्तस्मात् ब्राम्हणैः वैश्यकैरपि ॥१९९॥
शुद्रैरपि यथाशक्ति कृषिसाह्यं महाफलम् । नानाविधानां बीजानां गवामपि च दानतः ॥२००॥ ॥200॥
क्षेत्रदानान्महापुण्यमाहुर्लोके मुनीश्वराः । कुल्याखननतो वापि सस्यक्षेत्रस्य रक्षणात् ॥२०१॥
जलाशयस्थापनाद्वा वाप्यादीनां विशेषतः । अन्नशालास्थापनाद्वा कृषिसाह्यं महाफलम् ॥२०२॥
गवां च संरक्षणतो ब्राम्हणानां विशेषतः । यथाशक्तिक्रियासाह्यं महाफलमुदीरितम् ॥२०३॥
तस्मात् सर्वत्र देशेषु पुरुषास्तु कृपालवः । ग्रामरक्षणभृत्यांश्च तटरक्षणभृत्यकान् ॥२०४॥
स्थापयित्वा ही सर्वत्र तत्रतत्र विशेषतः । विद्राव्य चोरान् दण्ड्यांश्च दण्डयित्वा यथाक्रमम् ॥२०५॥
धर्मं स्थितिं च परमं सुखं जीवनरक्षणम् । प्रकुर्वन्तस्तु पुरुषाः देवैः श्लाघ्या प्रक्रीर्तिताः ॥२०६॥ 1
सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा । यस्मिनु संहश्यते सर्वं नियोक्तव्यः स पूरुषः ॥२०७॥ 2 3
ग्रामन्यायसभायां च भूमिपालैर्यु थाक्रमम् । ग्रामाधिपत्यं च तथा कृषियुक्तिप्रवर्तनम् ॥२०८॥ 4
तद्धीन शुभकरमित्याहुः परमर्षयः । ब्राम्हणणानामलाभे तु क्षत्रियो वैश्य एव वा ॥२०९॥ 5, 6,7

1 की 2 न् 3 दृ 4 र्य 5 द 6 णा 7 drop

तत्र संयोजनीयःस्यात् प्रजानां क्षेमहेतवे। सर्वत्रार्षं प्रमाणं च क्षेमाय विजयाय च ॥२१०॥ ॥210॥

कृषियुक्तिस्तु लोकेऽस्मिन् क्कचित् शूद्रेष्वपि स्थिता। स शूद्रः सद्गुणाढ्यश्च विप्रभक्तिपरायणः ॥२११॥ 1

शास्त्रविश्वासशाली च मानज्ञः साधुसेवकः। धीमान् कालप्रमाणज्ञः हितकारी हितप्रियः ॥२१२॥

भवितव्यश्च विनयी तद्युक्तिः श्लाघनास्पदम्। प्रायो ग्रामेषु सर्वत्र भृत्या शूद्राः प्रकीर्तिताः ॥२१३॥

त एव कृषिकार्येषु योक्तव्या नान्यजातयः। वैश्याश्च क्षत्रिया श्चैव गुणाढ्याः सुक्ष्मबुद्दयः ॥२१४॥ 2

गणनादिक्रियास्वेवं रक्षणादिक्रियासु च। नियोक्तव्या भूमिपालैः विप्रा नीतिषु नित्यशः ॥२१५॥

गवां रक्षणकार्येषु प्रजारक्षणकर्मणि। चोरदिदण्डकार्येषु जलाधारादिरक्षणे ॥२१६॥

देवालयादि रक्षासु कृषिकार्ये विशेषतः। कार्यान्तरेष्वपि ग्राम्येष्वेवं भूपालकर्मणि ॥२१७॥

ब्राम्हणाः क्षत्रिया वैश्याः शूद्राश्च दृढबुद्दयः। सर्वे सर्वत्र योक्तव्याः तदा क्षेमाय कल्पते ॥२१८॥

तदा जनपदस्यापि राष्ट्रस्य च विशेषतः। सुखादिरैकमत्याच्च जायते परमं सुखम् ॥२१९॥

ऐककण्ठ्यं चैकमत्यं पतङ्गेषु च नित्यशः। दृश्यतामिती निर्दिष्टं भार्गवेणेह मौनिना ॥२२०॥ ॥220॥ 3

तस्मात् ग्रामे जनपदे पुरे वा दुर्गकल्पने। निवासिनो जनाः सर्वे गतासूयादिदुर्गुणाः ॥२२१॥

सेतुसंरक्षणे मार्गरक्षणे कृषिरक्षणे। पुरग्रामादि रक्षासु चाक्रीडोद्यानरक्षणे ॥२२२॥

प्रजानां रक्षणे चापि गावामपि च रक्षणे। धर्मरक्षास्वपि तथा न्यायकार्यस्य रक्षणे ॥२२३॥ 4

यच्चान्यात् रक्षणं प्रोक्तं नानारूपं महर्षिभिः। सर्वासु तासु रक्षासु सर्वैर्ग्रामादिवासिभिः ॥२२४॥

---

1 न्  2 सू  3 ती  4 ग

प्रत्येकमादरः श्रेयान् शस्यते शास्त्रचोदितः । यस्मिन् ग्रामेऽथवा राष्ट्रे राज्ञः सद्म न कल्पितम् ॥२२५॥ 1

तस्मिन् देशे विशेषेण प्रजानां पालनाय हि । अमात्यो वा राजवंश्यः गुणी प्रतिनिधिस्तु वा ॥२२६॥ 2

प्रकुर्वीत निवासं तु धनसेनासहायवान् । प्रजाभिः प्रार्थिते दत्वा रक्षेत् ताश्चापदो भृशम् ॥२२७॥

नानाविधैरुपायैस्तु जीवनं परिकल्पयेत् । ब्राम्हणाः क्षत्रिया वैश्याः शूद्राः संकीर्णजातिजाः ॥२२८॥

ये चान्ये मनुजा लोके ग्रामादिस्थलवासिनः । स्वधर्मनिरतास्ते तु सुखभाजो यशस्विनः ॥२२९॥ 3

संप्राप्तपरमानन्दाः सकुटुम्बाः सगोधनाः । विराजन्ते हि देशेषु तत्रतत्र विशेषतः ॥२३०॥॥230॥

नृपाज्ञावर्तिनः सर्वे श्रुतिस्मृतिकृतादराः । परोपकारनिरतास्तथा वीतभया नराः ॥२३१॥

आधिव्याधिविहीनास्ते सत्क्रियाः साधुसेविनः । विराजन्ते हि देशेषु तत्रतत्र विशेषतः ॥२३२॥

सर्वेषामेव तेषां तु कृषिवृत्तिः सनातनी । शुभदा भूतिदा श्लाघ्या यथान्यायप्रवर्तनात् ॥२३३॥

ब्राम्हणाः क्षत्रिया वैश्याः स्वकर्मनिरता अपि । कृषिकर्मसु योग्यास्ते साधुश्लाघ्यं हि तद्विदुः ॥२३४॥

यज्ञानामपि चाधारः प्राणिनां जीवदायकम् । कृषिकर्म प्रशंसन्ति मुनयो दिव्यचक्षुषः ॥२३५॥

नृपात् प्राप्तं स्वतः क्रीतं सस्यक्षेत्रं तु मानवाः । संप्राप्य यत्नवन्तश्च कृषिकार्यकृतादराः ॥२३६॥ 4

देवानां च मुनीनां च ते मताः प्रीतिदायिनः । धनानामपि सर्वेषां कृषेरेव परं धनम् ॥२३७॥

परैरग्राह्यमादिष्टं सर्वश्लाघ्यं महाफलम् । देवानां प्रीतिजनकु शुद्धद्रव्यप्रदायि तत् ॥२३८॥ 5

पारतन्त्र्यहरं चैव नित्यं लक्ष्मीविलासकृतम् । तथातिथीनां देवानां स्वकुटुम्बस्य जीवदम् ॥२३९॥ 6

---

1 न् 2 न् 3 मा 4 तं 5 कं 6 कृत् ?

नानाविधानन्दकरं कृषिकर्म प्रशस्यते। अतस्तदन्या वृत्तिस्तु पारतन्त्र्येण गुम्भिता॥२४०॥॥240॥

पुण्यांनां हृयानिदा चापि निंन्दिता तत्त्वदर्शिभिः। अतः सदगुणसंपन्नः पुरुषा स्वप्रयत्नतः॥२४१॥ [1] [2] [3]

वेदाध्ययनसंपन्ना अपि रक्षाप्रवृत्तयः। वाणिज्यवृत्तयश्चान्ये शूद्राः संकीर्णजा अपि॥२४२॥

सत्यव्रता दयाढ्याश्च कृष्यादानरता भृशम्। संमान्यवृत्तयः कामं साधुभिश्च सुरैरपि॥२४३॥

कृषिप्रवृत्तिं सर्वेधां देवानां प्रीतिदायिनीम्। यत्नतो रक्षयेयुस्तां जीवानां जीवनप्रदाम्॥२४४॥ [4]

वने जनपदे देशे क्षेत्रे ग्राम्ये भृगोस्तटे। कृषिप्रवृत्तिं संकल्प्यां मन्यन्ते हि मुनीश्वराः॥२४५॥

पुरातनैस्तु मुनिभिरूटजाङ्गणभूमिषु। कृषिकर्मकृतं लोके सर्वप्राणिहितार्थिभिः॥२४६॥

तदादि कृषिकार्यं तु खण्डशः सूक्ष्मबुद्दिभिः। नीतं देशेषु सर्वत्र फलदं चाभवत् क्रमात्॥२४७॥

अतः कृष्यादानमेतत् सर्वैः पुरुषपुङ्गवैः। सूक्ष्मधीभिरिहासेव्यं शाश्वतानन्दहेतवे॥२४८॥ [5]

## ६. कृषिकार्यार्हद्रव्यसंग्रहणकथनम्॥

काश्यप उपदिशति -

मेधावी कृषिकार्यज्ञः भूलक्षणविदां वरः। शुभे मुहूर्ते सुमनास्त्वदारंभे कृषिक्रियाम्॥२४९॥ [6]

सेवेत फलसिध्यर्थं त्रिमूर्तिध्यानपूर्वकम्। भूदेवीं धान्यदेवीं च स्मृत्वा मनसि निर्मले॥२५०॥॥250॥ [7]

पूजयित्वाऽथवा भक्त्या द्रव्यसंग्रहणोद्यतः। गोष्ठं गोस्थानकं वापि गोमयालेपनक्रियम्॥२५१॥

---

1 ण्या 2 हा (?) 3 न्नाः 4 षां 5 वैः 6 स्त्वारभेत (?) 7 र्थ्य

गन्धपुष्पाद्यलंकारभासुरं च विशेषतः। तिन्दुकैस्तिनिशैर्वापि सर्जकैः सारदारुकैः ॥२५२॥
गोबन्धतूलकं कृत्वा शृंखलाद्यैरथापि वा। अलंकृत्य तु तं देशं गन्धकुंकुमपुष्पकैः ॥२५३॥
प्रदक्षिणं वा कृत्वा तत्स्थले गाश्चारयेत् बुधः। शुभलक्षणसंयुक्ताः धेनूः संचारयेदिह ॥२५४॥
सवश्चाय वृषभान् श्वेताङ्गान् शुभलक्षणान्। सुवर्णकुप्यशृङ्गाग्रान् गन्धाद्यैश्चाप्यलंकृतान् ॥२५५॥ 1
घासैः शष्पैः पलालैश्च जलपात्रैश्च मंगलैः। पूरयेदथ तंदेशं गोष्ठे शुभमुहूर्तके ॥२५६॥
क्रीत्वा वा वृषभान् श्वेतान् शुभलक्षणमानितान्। धेनूर्वा महिषान् वापि बन्धयेत्तत्र कोविदः ॥२५७॥
लांगलान् रज्जुजटिलान् हलानपि विशेषतः। साङ्गान् निरीशवन्तश्च सारदारुकृतान् ततः ॥२५८॥
शुभस्थलेऽथ निक्षिप्य गन्धाम्रदलपुष्पकैः। चन्दनैः कुंकुमैर्वापि मण्डितांश्च विशेषतः ॥२५९॥
सह मङ्गलघोषेण धान्यदेवीं च पूजयेत्। भूदेवीमय लक्ष्मीं च वाणीं गौरीं सुराधिपम् ॥२६०॥ ॥260॥ 2
वरुणं च धनेशं च पूजयित्वा विशेषतः। स्वकीयं क्षेत्रमासाद्य वृषभैः सह कोविदः ॥२६१॥
लाङ्गलैर्भद्रकैर्युक्तः सुमुहूर्ते सुलग्नके। कर्षणं कारयेदादौ ऐशान्ये कोणके शुभे ॥२६२॥
आग्नेये वापि वा भागे वारुणे वा क्वचित्स्थले। सलिलापूरणं कृत्वा सुकर्षाय तदा क्रमात् ॥२६३॥
प्रथमं कर्षणं भूमेः क्षेत्रे स्वीये विशेषतः। कारयेत् वृषवाहयेन हलेन कृषिकार्यवित् ॥२६४॥
एवं क्रमेण तत्क्षेत्रं चतुर्धा पञ्चधापि वा। हलेन कर्षयित्वा षटू दिवसं त्वधिकं तु वा ॥२६५॥ 3
लोष्टांश्च लगुडानन्यान् बहिर्निक्षिप्य गोमयम्। आजकं वालगं तत्र स्थापयेत् सारवृद्धये ॥२६६॥

---

1 सवत्सान्श्च 2 थ 3 ट्

खनित्रान् शंकुलान् क्षुद्रतलुकान् खड्गकान् तथा। छुरिका याश्च कृष्यर्हाः द्रव्यशास्त्रेषु निश्चितम् ॥२६७॥
युक्त्या तदानयेत्सर्वं लवित्रं लवसारकम्। यस्मिन् देशे यदा वृष्टिः प्रथमा हृश्यते क्षितौ ॥२६८॥ 1
तदा भूकर्षणं श्रेष्ठमाहुरत्र मुनीश्वराः। कूल्यामुखेन सलिलमापूर्य निजभूमिके ॥२६९॥
सस्यार्हकालेभूमेस्तु कर्षणं च मुनीरितम्। तस्मात्सर्वत्र देशेषु कृषिकालानुरुपतः ॥२७०॥ ॥270॥ 2
मित्राणामुपदेशाच्च युक्त्या च कृषिकार्यवित्। आदौ भूकर्षणं कार्यं सुनिमित्ते सुलग्नके॥२७१॥ 3

७. लाङ्गलपूजाक्रमकथनम् ॥

काश्यप उपदिशति -

लक्षणात् पूर्वमेवेह लक्षणज्ञैः कृषिवलैः। लाङ्गलाद्यर्चनं कार्यं वृषादीनां विशेषतः ॥२७२॥ 4
क्षेत्रस्य वाथ भूम्याश्च पूजनं फलदायकम्। शुद्धतोयेन गन्धाद्यैः दीपदानैरथापि वा ॥२७३॥
भूमिदेवी नमस्तेऽस्तु महि सर्वंसहेऽधुना। कृष्यारम्भं करिष्यापि प्रसन्ना भव सुव्रते ॥२७४॥ 5
कर्षणं ताडनं यच्च त्वयि यद्यत्कृतं मया। देवि क्षमस्व तत्सर्वं कुरु मह्यं महाफलम् ॥२७५॥
त्वमेव माता सर्वेषां प्राणिनामिह कीर्त्यते। अतः प्रसन्ना भूदेवि फलं देहामितं क्षितौ ॥२७६॥ 6
इति स्तुत्वा प्रार्थयित्वा भूदेवीं विष्णुवल्लभाम्। प्रदीक्षणीकृत्य नमस्कारपूर्वं कृषीवलः ॥२७७॥
दिग्देवान् रक्षकांश्चापि सुर्यमायुष्करं तथा। स्तुत्वा भूकर्षणविधौ कुर्यादारम्भमुत्तमम् ॥२७८॥ 7

---

1 दृ 2 रू 3 के 4 षी 5 वि 6 ह्य 7 सू

८. तत्र वृषभराजपूजाक्रमकथनम् ॥

**कश्यप** उपदिशति -

सौरभेय महासार वृषराजामितद्युते। भूकर्षणविधौ त्वं हि साह्यं कुरु ममानघ ॥२७९॥

सुगन्धमाल्यपुष्पाद्यैरद्य त्वां पूजयाम्यहम्। फलदो भव मे त्वं तु धर्मकृत् स्वस्ति ते भृशम् ॥२८०॥ 280

तृणैःशष्प्यैश्च सलिलैः त्वां पोष्याम्यहमादरात्। शंकरानुग्रहात् त्वं तु फलदो भव मे सदा ॥२८१॥ 1

उत्पाद्य तनयान् शश्वत् त्वत्तुल्यबलवीर्यकान्त्। अलंकुरु त्वं गोष्ठं मे त्वां पोष्याम्यहमादरात् ॥२८२॥ 2

वृषराज त्वमेवात्र धनधान्यादिवृद्धिकृत्। धर्मरूप त्वमेवेह तस्मात् त्वां पोषयाम्यहम् ॥२८३॥ 3

देवयज्ञं भूतयज्ञं यथा मे सफलं भवेत्। तथा दयां कुरु त्वं तु चापराधं क्षमस्व मे ॥२८४॥

इति संप्रार्थ्य वृषभं पूजयित्वा विशेषतः। श्रान्ता यथा ते न कलान्तांस्तावत्तत्कार्यमीरितम् 4
॥२८५॥

तन्मनःक्लेशहेतुस्तु विफलाय विनिश्चितः। तस्मान्न योजयेच्छ्रान्तान् वृषभान् कृषिकर्मणि ॥२८६॥

तदा गोपूजनं शस्तमित्याहुर्मुनिसत्तमाः ॥

---

1 ष्पै 2 न् 3 रू 4 कलान्ता

१. संग्रहेण गोवृषभलक्षणकथनक्रमः ॥

काश्यप उपदिशति -

गावश्च वृषभाश्चैव शुभलक्षणभासुराः । शुभदाः स्वामिनां प्रोक्ताः देशक्षेमप्रदाश्च ते ॥२८७॥

कृषिकर्मणि ते योग्याः वृषभा वृषवर्धकाः । श्वेताङ्गाः किंचिदुत्तुङ्गाः वृषभा मञ्जुनेत्रकाः ॥२८८॥

गम्भीरनिनदा ये च ते तु ब्राम्हण जातिकाः । रक्ताङ्गा नितरां तुङ्गाः गंभीरनिनदाश्च ये ॥२८९॥

तेजोबलसमेताश्च ते वृषाः क्षत्रजातिजाः । श्वेतरक्ताङ्कनैर्युक्ताः तन्मण्डलविभूषिताः ॥२९०॥ ॥२90॥

नातितुङ्गा नातिनीचाः ते वृषा वैश्यजातिजाः । कृषाङ्गा नातितुङ्गाश्च कोपवेगेन ताडिताः ॥२९१॥

सु वन्तश्च ते वृषाः शूद्र जातिजाः । एते सर्वे प्रशस्ताश्च कृषिकर्मणि योग्यकाः ॥२९२॥ 1

नातिदीर्घं न च कृशं वृषशृङ्गद्वयं शुभम् । मिथो वैषम्यहीनं च वृषशृङ्गं प्रशस्यते ॥२९३॥

खुराश्च वृषभाणां तु न कृशा नातिदीर्घकाः । वैषम्यहीनाश्च तथा दृढाः श्लाघ्या विनिश्चिताः ॥२९४॥

शुभा गतिर्दिर्घवालः वृषभाणां प्रशस्यते । नातिस्थूला न च कृशाः भारवाहित्वमेव च ॥२९५॥

प्रसन्नत्वं कार्यकाले वृषाणामुत्तमा गुणाः । खुरे विषाणे श्वेतश्च ललाटे पुच्छकेऽपि च ॥२९६॥ 2

वर्णान्तरविभूतिश्च वृषः शुभविवृद्धिदः । रम्यात्मानश्चहृष्टाश्च शुभवर्णसमुज्ज्वलाः ॥२९७॥

शुभावर्तादिसहिताः धनधान्यविवृद्धिदाः । सूक्ष्मरोमावलीव्याप्ताः गंभीरनिनदाश्च ये ॥२९८॥

मनोज्ञनयनोपेताः वृषभाः शुभदा मताः । रक्तवर्णा महाशृङ्गाः तेजोबलविवर्जिताः ॥२९९॥

---

1 ? 2 गु

स्खलद्दतियुताश्चापि क्रोधनिद्रावशं गताः । कृशाङ्गा धूम्रवर्णाश्च तथा बह्वाशिनश्च ये ॥३००॥ ॥300॥

ये विवर्णाश्च वृषभाः नितरां नीचकाश्च ये । कर्कशाङ्गाः क्रूरखाः वर्ज्यास्ते वृषभाधमाः ॥३०१॥

संपूर्णश्वेतकायाश्च रक्तकायास्तु वा वृषाः । शुभदा धनधान्यादिवृद्धिदाः परिकीर्तिदाः ॥३०२॥ 1

दोषहीना गुणोपेता वृषभाः शुद्धजातिजाः । संग्राह्याः क्षेमसिध्यर्थं कृषिकारैर्विशेषतः ॥३०३॥

सुलक्षणा धेनवश्च महिषाश्च तथा मताः । महिष्यश्च बहुक्षीराः रक्षणीयाः कृषीवलैः ॥३०४॥

मेषाश्छागाश्च बहुधा कृषिकार्यफलप्रदाः । परंपरोपदेशेन परिक्षास्वपि पण्डितैः ॥३०५॥

निश्चितान् दोषहीनांश्च वृषभादीन् शुभार्थिनः । रक्षेयुश्च प्रयत्नेन कृषिसाफल्यहेतवे ॥३०६॥

कालेषु पोषणीयश्च हिताहारप्रदानतः । रोगेभ्यो रक्षणीयाश्च लालनादिभिरन्वहम् ॥३०७॥ 2

गोष्ठस्थलं निर्दिशेच्च तेषां पुष्टिप्रदं बुधः । कृषिकर्मणि याद्यं तु सहाया वृषभोत्तमाः ॥३०८॥

अतः सत्कुलसंजाता धेनवश्च विशेषतः । कृषीवलैस्तत्रतत्र ग्रामेषु नगरेष्वपि ॥३०९॥

शुभलक्षणसंपन्नाः धेनवस्तु परःशतम् । पालनीयाः कृषिकरैः ग्रामेषु नगरेष्वपि ॥३१०॥ ॥310॥

पलालतृणनीराद्यैः लालनैर्बहुरक्षणैः । धर्मकामार्थसिद्धिस्तु धेनूनां पालनात् भवेत् ॥३११॥

रोगप्रशान्तिश्च तथा बालवृद्धादि रक्षणम् । गोसहस्रं यत्र देशे पाल्यते प्रीतिपूर्वकाम् ॥३१२॥ 3

तत्र देशेषु पर्जन्यो वर्षत्येव न संशयः । गवां रक्षणतो दानात् देवानां प्रीतिरुत्तमा ॥३१३॥

अतः प्रजानां क्षेमादिरित्येवं भार्गवोऽब्रवीत् । अतः सर्वप्रयत्नेन गोगणं तु कृषीवलाः ॥३१४॥

---

1 ताः 2 या 3 क

रक्षेयुश्च वनान्तेषु ग्राममध्ये च सर्वतः। स्वयं भृत्यगणैश्चापि गोपालैश्च विशेषतः॥३१५॥

प्रत्यब्दं तु शुभे काले गोपूजा च विशिष्यते। दिनान्ते प्रत्यहं तासां गन्धपुष्पादिपूजनम्॥३१६॥

यशस्यं शुभदं प्रोक्तं सर्वशास्त्रेषु कीर्तितम्। सत्सन्तानप्रदं पुंसां त्रिवर्गफलदं तथा॥३१७॥

छायासु ताश्च ते छागवृषभाद्याः क्रियाकराः। मध्याह्नकाले ग्रीष्मे तु स्थाप्या रक्ष्याश्च धीमता॥३१८॥

शीतकालेषु गोष्ठे तु हिताहारार्पणादिभिः। संरक्ष्याः क्षेमसिध्यर्थं कुटुम्बस्यापि भूपतेः॥३१९॥

गोरक्षणं तु भूपालैः कर्तव्यं धर्म्यमीरितम्। चोराच्च दुष्टसत्वाच्च तद्रक्षणमथार्पणम्॥३२०॥॥३२०॥

महाफलं समुद्दिष्टं कृषिकार्ये विशेषतः।

इति शास्त्रोपदेशक्रमः॥

-o-

## अथ प्रथमो भागः (१)

## ॥धान्यादिकृषिक्रमकथनम्॥

### १०. सस्यार्हकालपरिक्षात्क्रमः
### क्षेत्र विभागक्रमश्च

काश्यप उपदिशति -

कृषिकार्यक्रमविदो लोके सर्वत्र धीजुषः । वृषभान् महिषान् धेनूः भृत्यानपि च सेवकान् ॥ ३२१॥

----------------- । पोषयित्वा नियोगज्ञान् कृषिं क्षेत्रेषु कल्पिताम् ॥ ३२२ ॥

वर्धयेयुः क्रममुखं विविधं क्षेत्रयोग्यताः । आदौ कालपरीक्षात्र मुख्यकल्या विधीयते॥ ३२३ ॥

काश्मीरदेश्यके वङ्गदेश्ये नेपालदेश्यके। पाञ्चालकोसलकुरुविराटावन्त्य भूमिके ॥ ३२४॥

मालवे शकदेश्ये वा सिंधुसौवीर भूमिषु । शूरसेनावन्तिचेदिकोंकणान्ध्रादि भूमिषु ॥३२५॥

यदायदा वृष्टिपातस्तदा शस्ता कृषिक्रिया । यत्र ग्रीष्मादिकालेषु नदीकुल्यादिमार्गतः ॥३२६॥

क्षेत्रेषु सलिलोत्क्षेपः तदा शस्ता कृषिक्रिया । यत्रागा ध जलाधारप्रणालीकुल्यकामुमुखात् ॥३२७॥ 1

यत्रयत्र जलोत्क्षेपः तदा तत्र कृषिः शुभा । मेघोदयजलस्त्रावमगाधसलिलाशयम् ॥३२८॥

कुल्याजलसमृद्धिं च वीक्ष्य धीमान् कृषीवलः । कृषिं प्रकल्पयेत् युक्त्या स्थलसंपत्क्रमात् भुवि॥३२९॥

द्विधा विभक्तानि लोके क्षेत्राणि स्वीयरुपतः । तत्रतत्र नदीतीरे ग्रामेष्वपिवनान्तरे॥३३०॥॥३३०॥

पर्वतस्य तटे चैवं निम्नोन्नततलेऽपिच । शालिभूमिस्तु तत्राद्या मुनिभिः कथितोत्तमा ॥३३१॥

द्वितीयाढकभूमिस्तु मध्यमापि फलप्रदा । शालिभूमिस्तु सलिलप्रचुरा तु स्वभावतः ॥३३२॥

संपूर्णकर्दमाख्याता नितरां मृदुमृत्तिका । कुल्योपकुल्या शाखालिंगुभिता तज्जलंस्त्रवा॥३३३॥

समन्ततः क्षुद्ररुपरक्षामृत्तिकाभित्तिकाः । खलस्वरुपतो वापि ग्रामवास्तुस्वरुपतः ॥३३४॥ 2 3

---

1 Drop   2 रू   3 रू

क्षेत्रपुङ्गि[1]स्वरूपाद्वा शालिभूमिस्थितिर्मता । प्राच्यां क्वचिन्निम्नभागा प्रतीच्यामथ च क्वचित् ॥३३५॥
याम्ये क्वचिन्निम्नतला कौबेर्या निम्नभूमिका । क्वचित्प्रायः समतला कुल्या नीरग्रहोन्मुखी ॥३३६॥
क्षेत्रात् क्वचित् क्षेत्रतलप्रवेशार्हजलस्त्रवा । एवं स्वरूपं विविधं शालिभूम्यास्तु निश्चितम् ॥३३७॥
प्रथमाकर्षणादीह[2] व्रीहयुत्पत्त्यवधि क्षितौ । शालिभूः पूर्णसलिला ख्याता पूर्णफलप्रदा ॥३३८॥
ग्रामादिवास्तुभूम्यां च वनान्ते च तटे क्वचित् । उन्नता भूर्द्वितीया सा कथिताढकभूमिका ॥३३९॥
स्वल्पोदबिन्दुसंसेव्या चणकाढकवर्धिनी । नैतस्या जलकुल्यादि प्रकल्पनमुदीरितम् ॥३४०॥ ।340॥
प्रायेण स्वल्पसलिलसेकात् कर्षणयोग्यका । ततो बीजावापकाले किंचित्सलिलपानता ॥३४१॥
एवं समुचिते काले जीवनं बीजजीवदम् । एता द्दशगुणोपेता कथिता चाढकस्थली ॥३४२॥
शालिभूम्याश्चाढकादिभूम्याश्चार्हं कृषीवलैः । बीजसंग्रहणं नानारूपमत्र मुनीरितम् ॥३४३॥

## ११. नानाविधबीजसंग्रहणक्रमकथनम् ॥

काश्यप उपदिशति -

पूर्वं संप्रार्थितो धात्र्या धाता लोकपितामहः । बीजानि विविधानीहासृजत्पुनरचिन्तयत् ॥३४४॥
तदाशयं विदित्वा तु भूमिदेवी महोदया । उवाच हर्षेण विधिं प्राणिनां सुखसिद्धये ॥३४५॥
विधे ननु त्वया सृष्टानीमानि विविधानि तु । बीजानि मयि निक्षिप्तान्यादरादचिरेण हि ॥३४६॥

---

1 पङ्क्ति (?) 2 दि (?)

प्राप्ताङ्कुराणि नियतं भविष्यन्ति न संशयः। तवानुग्रहभूम्ना च वासवस्य विशेषतः॥३४७॥
प्रत्यब्दं मेघवृष्टिश्च नियतेन भविष्यति। यथाकालं प्राप्तवर्षाः प्रजाः सर्वत्र सर्वतः॥३४८॥
कृत्वा बीजावापनं तु सुक्षेत्रेषु विशेषतः। संपूर्णफलभाजश्च पुष्टा हृष्टाश्च नित्यतः॥३४९॥
भविष्यन्ति कृषिज्ञाश्च नानादेशेषु भूतले। देवानां प्रीतिरतुला यज्ञादीनां विवर्धनम्॥३५०॥ ॥350॥
प्रजानामतिथीनां च प्रीणनं भोजनादिभिः। धेन्वादिप्रीणनं काल्यं सफलं भूतयज्ञकम्॥३५१॥
इति विज्ञापितो देव्या मेदिन्या कमलासनः। तथास्त्वित्यब्रवीद्वाक्यं सर्वप्राणिहितप्रदम्॥३५२॥
तदादिलोके सर्वत्र बीजानि विविधानि तु। रक्ष्यन्ते कृषिकर्मज्ञैः मानवैः सूक्ष्मबुद्धिभिः॥३५३॥
शाल्यादिकस्तु प्रथमः निर्दिष्टो हि मुनीश्वरैः। आढकादिद्वितीयश्च तृतीयः शाकसन्ततिः॥३५४॥
लताकुसुमवर्गस्तु चतुर्थः किल कीर्तितः। एतच्चतुर्विधं लोके कृषिकर्म विनिश्चितम्॥३५५॥
पुष्टिप्रदं च फलदं मानवानां विशेषतः। सर्वर्तुष्वपि संतोषजनकं देवतुष्टिदम्॥३५६॥
गोवृषोष्ट्राश्वकुंभ्यादिजीविनां जीवदायकम्। नारदाद्यैर्योगिवर्यैरुपदिष्टं हि भूतले॥३५७॥
सुहीणालैरुत्तमैश्च स्वस्वदेशस्थलीष्वपि। कृषिकर्म कृतं भक्त्या भृत्यवर्गैश्च रक्षितम्॥३५८॥ 1
तदादि ब्राम्हणवरैः क्षत्रियैर्वैश्यजातिजैः। शूद्रैरन्यैश्च बहुधा सुक्षेत्रे काल योग्यकम्॥३५९॥
आरब्धं कृषिकार्यं तु बीजमुख्यं प्रकीर्तितम्। अतः सुधीभिर्भूलोके कृषिकर्मविदां वरैः॥३६०॥ ॥360॥
बीजानां संग्रहो युक्त्या कल्पनीयो विनिश्चितः। नामानि क्रमशो वक्ष्ये बीजानामिह सिद्धये॥३६१॥

1 म

शाल्यादिःकलमादिश्च षष्टिकादिश्च तत्त्रिधा । रसवर्णकजात्याद्यैः विभक्तं कृषिकोविदैः ॥३६२॥

किंचित् घनास्तु कलमाः रसाधिक्याः समुज्ज्वलाः । षष्टिका रसहीनाश्च कृताः कमलयोनिना ॥३६३॥

शालिव्रीहिस्तु षड्विंशद्भेदकः परिकीर्तितः । तत्रतत्र हि देशेषु भूमिभेदेन कोविदैः ॥३६४॥

बीजावापः प्रकर्तव्यो यथाकालमतन्द्रितैः । तस्मात्सर्वप्रयत्नेन तद्रक्षणमुदीरितम् ॥३६५॥

श्वेतशालिः स्कशालिः स्थूलशालिस्तथैव च । दीर्घशालिः स्वादुरसः कलमः श्वेतवर्णकः ॥३६६॥

रक्तवर्णश्च कलमः कलमः स्थूलदेहकः । दीर्घाकृतिश्च कलमः व्रीहिर्हैमाख्य शंबकः ॥३६७॥

कपिशः शंबकोऽन्यश्च रक्तशंबश्च वर्णतः । कृष्णशंबश्चान्यरुपः[1] नितरां रसवन्मतः ॥३६८॥

शुकव्रीहिः स्थूलकायो व्रीहिश्चान्यः प्रकीर्तितः । घनव्रीहिश्च पलशव्रीहिश्च रसमेदुरः ॥३६९॥

स्वादुव्रीहिश्च नितरां फलव्रीहिस्तथा परः । द्राक्षाव्रीहिश्चापरस्तु नीवारःश्वेतकृष्णकः ॥३७०॥ ॥370॥

यवौ च श्वेतकृष्णौ च स्थूलाकारस्तथैव च । समरव्रीहिरपरः नितरां राशिकारकः ॥३७१॥

कलव्रीहिश्च परमः नितरां पुष्टिदायकः । सितव्रीहिः पीतवर्णः व्रीहिश्चाजीर्णहारकः ॥३७२॥

इति षड्विंशतिभिदा कल्पिता धान्यराशयः । सर्वेषामपि चैतेषां बीजानां रक्षणं क्रमात् ॥३७३॥

अर्कातपे शोषितानां सुपक्वानां खलस्थले । स्वग्रहे[2] वा रक्षणं तु प्रधानं शुभवर्धकम् ॥३७४॥

भूपालैरथवा रक्ष्यं काले देयं प्रकीर्तितम् । बीजराशिः परश्रेयः कृषेस्तु प्रथमं धनम् ॥३७५॥

नराणामपि देवानां प्रीतिदं दानयोग्यकम् । तस्मात् कृषिवलैर्युक्त्या बीजसंरक्षणं वरम् ॥३७६॥

---

1 रू  2 गृ

एतानि तानि बीजानि संपूर्णफलदानि च । मासेषु त्रिषु वा तानि चतुर्मासेऽथवा स्थले ॥३७७॥
कानिचित् पञ्चमासेषु षण्मासेष्विह कानिच । सप्तमासेष्वष्ट मासेष्वधिकक्रमतः क्वचित्॥३७८॥
फलदानि सुपक्वानि निर्गीतानि मुनिश्वरैः । तस्मात् स्त्रदेशे क्षेत्रेषु जलस्त्रावानुकूलतः॥३७९॥ [1] [2]
शाल्यादिकृषिकार्येषु चारम्भः सुखसिद्दये । पूर्वपुरुषकार्यादिक्रमतस्तु क्वचित्स्थले ॥३८०॥ ॥३४०॥
मेघोदयजलस्त्रावक्रमतश्चान्यतो भूवि । देशकालानुगुण्येन कृषिकर्म प्रशस्यते ॥३८१॥ [3]
नरेन्द्राणां प्रजानां च फलदं परिकीर्तितम् । धेन्वादीनामपि तथा पतङ्गानामपि क्रमात् ॥३८२॥
जीवसौख्यप्रदमिदं कृषिकर्म सुनिश्चितम् । एवमाढकबीजानि माषबीजानि च क्रमात् ॥३८३॥
मुद्रानां चणकानां च गोधूमानां विशेषतः । तिलानां कीरकानां च कोद्रवाणां क्वचित्स्थले ॥३८४॥ [4]
यवराणां कुलुत्थानां श्यामानां कृष्णसारिणाम् । इक्षूणामपि पुण्ड्राणां जातिभेदरसक्रमैः ॥३८५॥
विभक्तानां बहुविधं धान्यानामुष्णबीजकम् । जीरकानां सर्षपानां मरीचीनां तथैवच ॥३८६॥
विधेयानां च तूलान् मेरण्डानां क्वचित्स्थले । एतेषामपि बीजानां रक्षणं सुखदायकम् ॥३८७॥ [5]
पटोलिकानां बीजानि वार्ताकानां तथैव च । जटिका राशिजटिका वल्लिका वनवल्लिका ॥३८८॥
पवका चापि विविधा रसपूर्णा च कीर्तिता । शाकाश्च विविधा वर्णरसजातिप्रभेदकाः ॥३८९॥
कूश्माण्डानां कलाटानां नानारूपं तु बीजकम् । कुस्तुंबानां कटानां च धान्यकानामपि क्वचित् ॥३९०॥ 390 [6]
हरिद्राणां च शुष्ठीनां बीजसंरक्षणं शुभम् । सूरणानां च कन्दानां शाकुटानां तथैव च ॥३९१॥ [7]

---

1 नी 2 स्व 3 भु 4 द्रा 5 ना 6 रू 7 ण्ठी

रसकानामपि तथा कदलीनां विशेषतः । बीजसंरक्षणं कार्यं कृषिकर्म विशारदैः ॥३९२॥

एला द्राक्षा च नलदं नागवल्ली रसोज्वली । पूगानां क्रमुकानां च बीजसंरक्षणं शुभम् ॥३९३॥ 1

मल्लिकापीतपुष्पाणां कुन्दानामपि बीजकम् । रक्षेयुरतिमुक्तानां चांपेयानामपि क्वचित् ॥३९४॥ 2

शिग्रूणां भूर्जकानां च करंजानामपि क्वचित् । शमीनां नक्तमालानां देवदार्वाख्यभूरुहाम् ॥३९५॥ 3

विभीतकप्रियंग्वोश्च तथामलकभूरुहाम् । पिण्डीतकानां निम्बानां लिकुचानामपि क्वचित् ॥३९६॥

शिरीषाणामशोकानां दाडियानां तथैव च । श्रीपर्णीनां तमालानां सिन्धुवाराख्यभूरुहाम् ॥३९७॥

कपित्थानां च जम्बूनां सप्तपर्णाख्यभूरुहाम् । बीजसंरक्षणं कार्यं सुखाय च कृषीवलैः ॥३९८॥

उदुम्बरश्चलदलाः तिनिशाः पारिभद्रकाः । पलाशाश्च मधूकाश्च वटाः प्लक्षा रसालकाः ॥३९९॥

तिन्दुकास्तिलका नीपाश्चार्जुनाः सर्जकाश्च ये । बदराः पीलुवृक्षाश्च जंबीराः पुन्नागाश्च ये ॥४००॥ ॥400॥

वंशाः काशाश्च विविधाः मातुलुंगाख्यभूरुहः । एवं तु विविधा वृक्षाः पत्रैः पुष्पैः फलैरपि ॥४०१॥

फलप्रदा मानवानां पतङ्गानां विशेषतः । वटादयो महावृक्षाः ये चान्ये परिकीर्तिताः ॥४०२॥

सर्वेषामेव तेषां तु बीजसंरक्षण हितम् । सुपक्वानामातपे तु शोषितानां विशेषतः ॥४०३॥

बीजानां सन्तती रक्ष्या भाण्डेषु विविधेषु च । पलालराशिषु तथा कुण्डेष्वपि कृषीवलैः ॥४०४॥

शशमूषकमार्जारैः न दूष्या बीजसन्ततिः । जलराशिकणैर्वापि वातवृष्ट्यादिभिस्तथा ॥४०५॥

यथा न दूषिता दोषैरन्यैश्च विविधैरपि । बीजानां सन्ततिः पाल्या तथा गेहे खलस्थले ॥४०६॥

बीजानामुत्तमानां तु पालनं धर्मबुद्दितः । श्रेयसे कृषिकानां तु कथितं मुनिपुंगवैः ॥४०७॥
शाल्यादिबीजानि तथा शाकबीजानि वा पुनः । वृक्षाणामपि बीजानि कन्दानामपि बीजकम् ॥४०८॥
क्रीत्वा संगृहय वा लोके कृषिकर्मविदो नराः । ब्राम्हणाः क्षत्रिया वैश्याः शूद्रा संकीर्णजा अपि ॥४०९॥
स्वक्षेत्रेषु स्वदेशस्थेन्वादरात् युक्तितस्तथा । नानारूपेषु वृषभैः कर्षितेषु विशेषतः ॥४१०॥ ॥410॥ [1] [2]
काले समुचिते सिक्तान्यथवा वर्धितानि च । आवापविधिना युक्त्या विन्यसेयुर्यथाक्रमम् ॥४११॥

## १२. बीजावापार्थं भूकर्षणक्रमः ॥

काश्यप उपदिशति -

बीजावापस्तु विविधो निर्दिष्टः शास्त्रकोविदैः । क्वचित् शालेयभूम्यांतु कर्षणं वृषभैः शुभैः ॥४१२॥
अतो निर्दिष्टमेतेषां बीजानां व्रीहिसन्ततेः । कन्दादीनामपि तथा वर्धनं प्रथमं स्थले ॥४१३॥
कार्यमित्येवमादिष्टं कृषिकर्मविचक्षणैः । जलक्षेत्रे च तद्भिन्नो जलसिक्ते शुभस्थले ॥४१४॥ [3]
भूकर्षणं च वृषभैः कारायित्वा यथाक्रमम् । बीजावापनयोग्यानि क्षेत्राणि विविधानि तु ॥४१५॥ [4]
कारयित्वा समीकृत्य चाङ्कुरन्यसनं तु वा । कल्पयेयुर्यथाशक्ति युक्त्या च स्थलयोग्यकम् ॥४१६॥
आक्रीडे चापि चारामे नृपोद्याने तथैव च । ग्रामस्य नगरस्यापि बहिरंतस्तु वा स्थले ॥४१७॥
वृषभैर्भूकर्षणं च खनित्राद्यैः समक्रिया । खेटाद्यैश्च समीकारः क्षेत्राणां परिकीर्तितः ॥४१८॥

---

1 ष्वा 2 रू 3 न्नो 4 र

सीताक्रमश्च क्षेत्रेषु बीजावापाय कोविदैः। क्वचित्कल्पश्च निर्दिष्टः क्वचित् खननमेव च ॥४१९॥
कन्दादीनां स्थापनार्थमवटं वा प्रकल्पयेत्। कदल्याद्या ये च लतातरवः संप्रकीर्तिताः॥४२०॥ ॥420॥
तेषा बीजाङ्कुरं युक्त्या कन्दस्थापनमेव च। लतया वर्धनं चापि विविधं कृषिकोविदैः॥४२१॥
समीकृते हि सुक्षेत्रे यथाकाले सपेष्टके। न्यसनं फलदं चोक्तमृषिभिस्तत्त्वदर्शिभिः॥४२२॥
तस्मात् भूकर्षणं शस्तं शालिक्षेत्रे लतास्थले। शाकादिवृद्ध्यर्हभूमौ उद्याने वृक्षकस्थले॥४२३॥
कर्षणं चावटं सीता रेखाकल्पनमेव च। तत्तत्क्षेत्रानुकूल्येन कल्पयेत् कृषिकोविदः॥४२४॥
जलसेकात् तेन हीनमर्करोचिछ्छटाक्रमात्। शुष्कितं वा स्थले धीमान् बीजावापाय निर्दिशेत्॥४२५॥ 1
लतादिस्थापने चैवं वृक्षाणां स्थापने तथा। कदलीकन्दविन्यासे ह्यङ्कुरस्थापनेऽपि च॥४२६॥
भूकर्षणादिकं सर्वं कृषिकार्यं तु युक्तितः। परंपरोपदेशाच्च कारयेत् फलसिद्धये॥४२७॥

## १३. अथ विविधधान्यप्राप्त्यर्थं कृषिक्रमादिकथनम्॥

काश्यप उपदिशति-

कोसलादिषु देशेषु नदीसलिलपूरिते। सस्यक्षेत्रसमूहे तु शाल्यादिः कृषिरुत्तमा॥४२८॥
निर्दिष्टा मुनिभिस्तस्मात् धीमद्भिस्तु कृषीवलैः। कलमव्रीहिनिवहान् प्राप्तुं कृतविनिश्चयैः॥४२९॥
जलाशयानामथवा नदीनां च ह्रदस्थले। कुल्यामुखात् यथाकालं सस्यक्षेत्रेषु चोदितम्॥४३०॥ ॥430॥

1 च्छ

आदावापूर्य तदनु कर्षणं वृषभैर्मतम् । ततः सलिलपूर्णानि सस्यक्षेत्राणि मानवाः ॥४३१॥
शांकरात् दिक्कोणभागादथवा तु क्वचित् स्थले । प्राच्यां प्रतीच्यामथवा कर्षणं शुभदायकम् ॥४३२॥
पूर्वमेव क्वचिद्देशे निबिडं वर्धितानि च । शाल्यङ्कुराणां जालानि चोत्खातक्रममादिशेत् ॥४३३॥
बन्धीकृत्य तु तज्जालं कर्षणान्मृदुतां गते । जलकर्दमभूयिष्ठे शालिक्षेत्रे सुलग्नके ॥४३४॥
अजाशकृत्कणैरेवं गवां चापि शकृत्कणैः । लताव्रततिभिर्वापि प्राप्तसारे सयत्नके ॥४३५॥
पङ्क्तिशः पङ्क्तिशो भृत्यैः विन्यसेत्समभूमिके । तत्र क्षेत्रे स्वल्पजलं स्थापनीयमनन्तरम् ॥४३६॥
जलाधिक्यस्रावमार्गः कल्पनीयो विशेषतः । यथा सस्याङ्कुराणां तु नाशस्तु न भवेत्तथा ॥४३७॥
तथा तद्रक्षणं कार्यं तत्कर्मफलदं विदुः । एवमङ्कुरजालानां विन्यासश्च क्रमान्मतः ॥४३८॥
यत्राङ्कुराणां नाशस्तु वृष्ट्यादिबहुकारणैः । संपादितस्तथा धीमान् तत्र देशे प्रयत्नतः ॥४३९॥
नवाङ्कुराणा न्यसनं फलदं परिकल्पयेत् । ग्राम्येषु क्षेत्रजालेषु वन्ये वाथ स्थलान्तरे ॥४४०॥ ॥440॥
एकद्वित्रि चतुःपञ्च कुटुम्बिभिरुदस्थले । दशकैर्विंशतिगुणैः वृषभैर्युगपङ्क्तिभिः ॥४४१॥
एकदा सस्यभूमीनां कर्षणं सस्यवृद्धिकृत् । ऐकमत्यात् ग्रामजनैः बहुयुग्यप्रयोगतः ॥४४२॥
एकदा बीजविन्यासः फलदश्च प्रकीर्तितः । एवं सकर्दमजले शालिक्षेत्रे विशेषतः ॥४४३॥
ग्राम्ये वा नगरे वापि वन्ये वनतलान्तरे । सकुल्याजलनिस्रावे शाल्यङ्कुरगणेऽर्पिते ॥४४४॥
जलाधिकक्षये तत्र कल्पिते बहुवक्त्रके[1] । क्षेत्रन्यस्ता शालिबीजाङ्कुरपाली तु भूतले ॥४४५॥

1 वक्त्र

दिनानि सप्तदश वा तीर्त्वा सा कृष्टभूमिके। संप्राप्तमूला वृद्ध्यर्थं ब्रम्हणा तु विधीयते॥४४६॥
ततो बहिर्नवदलप्राप्तिश्च शुभदर्शनम्। या कान्तिः शुकपत्रेषु दृश्यते सुमनोहरा॥४४७॥
तया कान्त्याञ्चिता भाति बालेवारुढयौवना। एवं तु प्रथमे मासे गते व्रीहिस्थले भुवि॥४४८॥ 1
कलमादिदलानां हि वृद्धिः संदृश्यते क्रमात्। परितोऽङ्कुरवृद्धिश्च तत्समा कान्तिभूषिता॥४४९॥
प्रत्यहं पीततोयाच्च फलदानाय कल्पते। सस्यक्षेत्रसमूहेषु तदानीं तृणकोष्ठकाः॥४५०॥ ॥450॥
सकर्दमजलेष्वत्र वृद्धिभाजश्च निश्चिताः। त एव सस्यरिपवो निश्चिता मुनिसत्तमैः॥४५१॥
तस्मात् कृषीवलैर्युक्त्या तदा तु तृणकोष्ठकाः। मुञ्जाद्याश्चान्यदोषा ये निरस्या यत्नतो भुवः॥४५२॥
मुञ्जाकोष्ठतृणादीनां फलहानिप्रदायिनाम्। सस्यवृद्धिक्षयकृतां मूलतश्छेदनं शुभम्॥४५३॥
शालेयभूमिषु तदा जलमापूर्य कोविदः। तृणकोष्ठान् निस्याप्य पङ्क्तिशः पङ्क्तिशः क्रमात्॥४५४॥ 2
भृत्यवर्गैः प्रत्यहं वा वैरिछेदः प्रशस्यते। सस्यक्षेत्रेषु सर्वत्र चैवं रीत्या तृणादिषु॥४५५॥ 3
द्विषत्सु संनिरुध्देषु यत्नतस्तु कृषीवलैः (संनिरस्तेषु) प्राप्तशोभा वृद्धियुता भासते शालिसन्ततिः॥४५६॥ 4
ततो द्वितीयमासे तु शालिवृद्धिश्च निश्चिता। तदानीमपि ये केचित् तृणादिरिपवो यदि॥४५७॥
भवन्ति सस्यक्षेत्रेषु तन्निरासश्च युक्तितः। महाफलायकथितः सस्यानां बहुरुपिणाम्॥४५८॥ 5
श्वेतशाली रक्तशालिः कलमाद्याश्च ये पुरा। निर्दिष्टा विविधा धान्यराशयो बहुजातिकाः॥४५९॥
सर्वेषामपि तेषां तु कृषिकार्यं हि तुल्यकम्। भूमीनां कर्षणं चादौ ततो बीजाङ्कुरार्पणम्॥४६०॥ ॥460॥

---

1 रू 2 निरस्या 3 च्छे 4 संविरस्तेषु (Reading suggested by the scribe) 5 रू

तृणकाष्ठोत्क्षेपणं च पुनस्तत्कर्म चादरात्। जलसंपूरणं चैव शालिसंरक्षणं तथा ॥४६१॥

तुल्यरूपं तुल्यकार्यं निश्चितं कृषिकोविदैः। तथापि शालयः शंबाः कलमाद्याश्च भूमिषु॥४६२॥

जातिभेदाद्वर्णभेदात् त्रिमासफलदास्तु ते। केचिच्चतुर्मासफलाः पञ्चमासफलाः परे॥४६३॥

षण्मासफलदाश्चान्ये तदाधिक्यफलप्रदाः। तस्मात्तद्धान्यकणिक[1]प्रादुर्भावक्रमं भुवि ॥४६४॥

ज्ञात्वा कृषीवलैस्तावत् तेषां सलिलपूरणम्। निर्दिष्टं कृषिकर्मज्ञैः देशे सर्वत्र सर्वतः ॥४६५॥

यदा तु धान्यकणिकाराशिः सस्याग्रपङ्क्तिषु। क्षीरगर्भो घनः किंचिदानतः दृश्यते क्रमात् ॥४६६॥

तदा तत्कणिकाराशिरक्षणं तु शुकादपि। तुल्यमेव विनिर्दिष्टं नानादेशेष्वपीरितम् ॥४६७॥

एवमन्तः क्षीरपूर्णा धान्यानां कणिकावलिः। क्रमादन्तः सारवती तत्सारस्तण्डुलोदयः ॥४६८॥

तावत्पर्यन्तमेतेषां सलिलस्य प्रपूरणम्। शस्तं च फलदं प्रोक्तं अन्यथा फलहीनता ॥४६९॥

तस्माद्री[2]ह्यन्तरसकृत् क्षीरवृद्धिक्रमादिकम्। ज्ञात्वा तत्समये मूले सस्यानां क्षीरवृद्धये ॥४७०॥ ॥470॥

क्रमेण सलिलस्रावः कर्तव्यस्तु कृषीवलैः। नदीजलाशयजलपूरणं वा क्वचित्स्थले ॥४७१॥

ह्रदकूपादि सलिलपूरणं वा प्रयत्नतः। तदा फलप्रदं प्रोक्तं प्राणिनां सुखसिद्धये ॥४७२॥

वसुंधराया वरतः संकल्पात् ब्रम्हणस्तथा। उप्तानि सस्यक्षेत्रेषु बीजानि विविधानि तु॥४७३॥

फलदानि भवन्तीह वृद्धिं प्राप्य क्रमाद्भुवि। स्वयमेवं विधान्येव भासुराणि महीतले॥४७४॥

मूषकात् शलभात्कीरात् शुकादपि च दुष्टतः। प्राणिवर्गाद्रक्षणं तु विशेषफलदं विदुः ॥४७५॥

---

1 का  2 द्री

परस्परं स्नेहवन्तः ग्राम्याः कृषिकरा जनाः । सस्यानां कलमादीनां वयो निश्चित्य रूपतः ॥४७६॥ 1

साक्षादनुभवाद् बीजशक्त्या च स्थलवैभवात् । शाल्यादीनि सुपक्वानि रक्षितान्यनुजीविभिः ॥४७७॥

प्रदक्षिणादिभिर्मान्यानीह प्राणिहितानि च । यदा तु धान्यकणिकाराशौ पक्वे यथाक्रमम् ॥४७८॥

तत्तद्वयः कालयोगात् तदा न जलसेवनम् । कार्यमित्येवमादिष्टं कृषितत्त्वविदां वरैः ॥४७९॥ 2

शालिक्षेत्रेषु सर्वेषु कथितोऽयं क्रमो बुधैः । तस्मात् तद्व्रीहिकणिकाः पक्वकाले कृषीवलाः ॥४८०॥ ॥480॥

अतन्द्रा रक्षेयुरेताः दोषाद्विविधरूपतः । एवं तद्व्रीहिकणिकागणे पक्वे दलाग्रके ॥४८१॥ 3

व्रीहिकाण्डावलिः साग्रा (भव) पततीह भुवो तदा । एवं तां पतितां दृष्ट्वा दिनविंशतिकावधि ॥४८२॥

निरीक्ष्य पालयेत् क्षेत्रे भृत्यैर्वा स्वयमेव वा । अथ संप्ताप्तकाले तु दण्डानां व्रीहिसन्ततेः ॥४८३॥ 4

सुपक्वानां स्वर्णवर्णछुरितानामपि क्वचित् । तद्दण्डकर्तनं कार्यं शंकुलाद्यैः कृषीवलैः ॥४८४॥

अनुजीविकवर्गैश्च भृत्यैरन्यैस्तथा नराः । कर्त्तयेयुः दण्डकाण्डावलिं कलमसन्ततेः ॥४८५॥

एकदा वा प्रत्यहं वा मिथः साहयक्रियापरैः । कर्तनं फलदं प्राहुः यथा शाल्यादिदण्डकाः ॥४८६॥

नाशिता वा न नष्टा वा वृष्ट्याद्यैस्तस्करैस्तु वा । तथा तत्कर्तनं कार्यं सस्यानां विविधात्मनाम् ॥४८७॥

कर्तितव्रीहिदण्डानां साग्राणां तु कृषीवलैः । स्थापनं खलभूमीषु भृत्यैरनुचरादिभिः ॥४८८॥

त्रयं वा पञ्चकं तत्र दिनानां खलभूमिषु । स्थापनं रक्षणं शस्तं महाफलमुदीरितम् ॥४८९॥

श्लथाग्राणां सुपक्वानां दण्डानां व्रीहिसन्ततेः । खलभूम्यां मर्दनेन धान्यानां कणिकावलिः ॥४९०॥ ॥490॥

---

1 रू 2 र्य 3 रू 4 प्रा

पतिता राजते रत्नगुंभावलिरिवामला । पुनश्च व्रीहिदण्डाग्रे मर्दिते सति यत्नतः ॥४९१॥

वृषाणां महिषाणां च पादघट्टनकैस्तु वा । अवशिष्टो धान्यकणगुंभश्चाधःपतत्यधः ॥४९२॥ 1

एवं संमर्दनं कृत्वा व्रीहिदण्डावलेः खले । पुञ्जीकुर्युर्धान्यकणान् घनान् सारान् पृथक्कृतान् ॥४९३॥

घनहीनान् पेशलांश्च शूर्पवातादिवीजनैः । पृथक्कृत्य प्रयत्नेन पुञ्जीकुर्युः कृषीवलाः ॥४९४॥

आतपे शोषयित्वाथ निर्मलान् कारयेद्बुधः । देवानामथ राज्ञां च भागमेकं यथाक्रमम् ॥४९५॥

श्रोत्रियायापि विदुषे भागमेकं यथाक्रमम् । दत्वा दानं भृत्यवर्गपोषणं वा क्वचित्स्थले ॥४९६॥

अवशिष्टं धान्यराशिं स्थापयेत् स्वनिकेतने । रक्षयेच्च प्रयत्नेन काठिन्यादिषु युक्तितः ॥४९७॥

मृण्मयेष्वपि भाण्डेषु सुतप्तेष्वथवा क्वचित् । दृढकाचैर्निर्मितेषु पिठरेष्वपि वा क्वचित् ॥४९८॥

दृढरज्जुकृतेष्वक्तेष्वपि देशानुसारतः । क्वचिद्भूम्यां दृढस्थल्यामवटं वा प्रकल्पयेत् ॥४९९॥

तत्र सोपानसंयुक्ते व्रीहिधान्यादिकं क्वचित् । स्थापयेद्रक्षयेद्युक्त्या जलतस्करकीरकात् ॥५००॥ ।500।

मूषकादपि दुष्टाच्च सत्वात् भयविवर्जितम् । एवं तु कलमव्रीहिधान्यानां रक्षणं परम् ॥५०१॥

बीजानामपि चैतेषामातपे शोषितात्मनाम् । रक्षणं चैवमादिष्टमुत्तमैस्तु कृषीवलैः ॥५०२॥

एवं नीते धान्यराशौ स्वग्रहाणि कृषीवलैः । सस्यव्रीह्यादिदण्डानामातपे शोषितात्मनाम् ॥५०३॥ 2

गोपादमर्दितानां च राशिं मृदुलतन्तुकाम् । पुञ्जीकृत्य क्षुद्रमानं स्वग्रहे गोष्ठकेऽपि च ॥५०४॥ 3

स्थापयित्वा विशेषेण पलालानां च रक्षणम् । धेनूनां वृषभाणां च महिषाणां तथा क्वचित् ॥५०५॥

---

1 धः (थ?) 2 गृ 3 गृ

महिषीणामजानां च मृगाणामपि वा क्वचित् । पलालपूलकैरेतैः जीवनं शास्त्रनिश्चितम् ॥५०६॥
अतः सर्वत्र देशेषु धीमन्तस्तु कृषीवलाः । धान्यादिभिर्मानवानां प्राणरक्षणकर्मणि ॥५०७॥
चतुष्पात्प्राणरक्षासु सस्यकाण्डपलालकैः । महानंदाय कल्पन्ते कृतयत्ना विधानतः ॥५०८॥
आर्याणामुपदेशाच्च देशाचारक्रमादपि । तथा स्वानुभवाद्युक्त्या कृषिकर्मरता रताः ॥५०९॥
ब्राम्हणाः क्षत्रिया वैश्याः शूद्राः संकीर्णयोनयः । ये चान्ये भूसंपदस्तु फलितं धान्यराशिकम् ॥५१०॥ 510
सुमुहूर्ते सुलग्ने च विन्यस्य स्वग्रहोत्तमे । पूजयित्वा धान्यलक्ष्मीं धनलक्ष्मीं तथैवच ॥५११॥ 1
गन्धैः पुष्पैस्तथा शुद्दद्रव्यैः शास्त्रविनिश्चितैः । ब्राम्हणान् भोजयित्वाथ प्रदत्वा दक्षिणां शुभाम् ॥५१२॥
यशः सुखं च परममैश्वर्यं प्राप्य भूतले । तथा देवानुग्रहं च सुपुत्राश्च कलत्रकाः ॥५१३॥
पौत्रादिभिः समेताश्च हृष्टा राजन्ति नित्यशः । शालिक्षेत्रेषु विविधेष्वतः प्राप्तकृषिक्रियाः ॥५१४॥
मानवा युक्तितो देशे स्वकीये च वनान्तरे । ग्रामेष्वपि च सत्क्षेत्रे स्थल्यामपि तथा क्वचित् ॥५१५॥
सारक्षेत्रे नित्यजले द्वितीयं कृषिकर्म च । कृत्वा तत्फलमप्यत्र प्राप्नुवन्ति महोदयाः ॥५१६॥
प्रत्यब्दमेवं सर्वत्र द्विरावृत्तिकृषिक्रिया । क्षेत्रेषु बहुरुपेषु शस्यते फलदायिनी ॥५१७॥ 2
अजाशकृत गोशकृत् कलतादीनां समर्पणैः । क्षेत्राणां सारमुत्पाद्य द्वितीयावृत्तिरिष्यते ॥५१८॥
क्रियाक्रिया योग्यपदा फलदा च प्रकीर्तिता । प्रत्यहं वीक्षणाच्छालिक्षेत्राणां माननादपि ॥५१९॥
कृषेश्च क्रमयोगाच्च शान्तात्मानः कृषीवलाः । धेन्वादीनां रक्षणाच्च प्राप्नुवन्त्याधिकं फलम् ॥५२०॥ 520

---

1 गृ 2 रू

तस्मात् कृषिक्रमविदो मिथ्या मैत्र्यादि भाषणाः । द्वितीयावृत्तिककृषिकार्याय कृतमानसाः॥५२१॥ 1

प्रत्यब्दं गोरक्षणं च भृत्यानामपि रक्षणम् । बीजानां रक्षणं चापि कुल्यादीनां च रक्षणम् ॥५२२॥

जलाशयतटाकादिहूदानामपि रक्षणम् । खनित्रशंकुलादीनां रक्षणं खलरक्षणम् ॥५२३॥

वृतेस्तु रक्षणं चापि क्षेत्राणामपि रक्षणम् । मुख्यं धर्ममिति ज्ञात्वा तथा कृत्वा प्रयत्नतः ॥५२४॥

देशाचारवशाच्चापि कृषिकर्म महोदयम् । महानन्दाय कल्पन्ते त्रिवर्ग सुखसंपदः ॥५२५॥

१४. अथ आढकादिविविधद्रव्यप्राप्त्यर्थं कृषिक्रमादिवर्णनम् ॥

काश्यप उपदिशति -

आढकानां च माषाणां चणकानामपि क्वचित् । मुद्गानां च कुलुत्थानां तिलानां च क्वचित्स्थले ॥५२६॥

आवापरचापि बीजानां मरीचीचीरकादिनाम् । कृषिकर्म च कर्तव्यं व्यञ्जनं तैरुदीरितम् ॥५२७॥ 2

अन्नं तु विविधं लोके धान्योत्थैस्तण्डुलादिभिः । क्रियते प्राणरक्षार्थं तत्कल्पः पाकशास्त्रकम् ॥५२८॥

वीरसेनेन राज्ञा तु पाकशास्त्रं महत्कृतम् । तत्पुत्रेण नलेनापि गर्गेण च महर्षिणा ॥५२९॥

तत्रोक्तान्नव्यञ्जनादिक्रमस्तु विविधो मतः । तदेव व्यञ्जनं लोके यान्नाद्यानां रुचिप्रदम् ॥५३०॥ ॥530॥

माषाढकमरीच्याद्यैः लवणैश्च गुडादिभिः । संपाद्यते हि सर्वत्र पुष्ट्यारोग्यप्रदं नृणाम ॥५३१॥ 3

धान्योत्पादनकाले च चतुरैस्तु कृषीवलैः । वन्येष्वपि च भागेषु अपि ग्राम्येषु भूतले ॥५३२॥

---

1 थो 2 श्चा 3 भिः

आढकानां च भाषाणां मुद्गादीनां च कालतः । सीरकृष्टेषु भागेषु स्वल्पसिक्तेषु वारिदैः ॥५३३॥ 1
कुल्यानीरकणैर्वापि बीजावापश्च निश्चितः । आढकेष्वपि माषेषु मुद्गेष्वपि तिलेष्वपि ॥५३४॥
चणकेष्वपि शास्त्रेषु बृहल्लघु च निश्चितम् । जलसिक्ते भूमिभागे चोत्तुङ्गे तत्रतत्र तु ॥५३५॥
तिलादीनां तु बीजानामावापः कृषिचोदितः । चतुः पञ्चषसंख्येषु वासरेषु गतेषु हि ॥५३६॥ 2
आढकाद्यङ्कुरोत्पत्तिः दृश्या सीरस्थले तदा । सा च भूसारयोगेन निश्चिता शास्त्रकोविदैः ॥५३७॥
प्रत्यक्षमालोकिता च नानादेशेष्वपि स्थले । व्रीहि क्षेत्रं तु भूलोके जलभूमिरितीरितम् ॥५३८॥
माषादिक्षेत्रभूमिस्तु तारभूमिरिति स्मृता । तस्मादाढकमाषादिकृषिकर्म कृषीवलैः ॥५३९॥
तारक्षेत्रेषु कर्तव्यमिति प्रोवाच भार्गवः । शिष्टाचारक्रमवशात् सौकर्याद्वा तलस्थितेः ॥५४०॥ ॥540॥
व्रीहिक्षेत्रेषु माषादिबीजावापः क्वचित्स्थले । फलप्रदश्चनिर्दिष्टः शास्त्रेऽस्मिन्नपि काश्यपे ॥५४१॥
यथादेशाचारवशात् स्थलकालवशात्तु वा । जलभूमिक्षेत्रभागे तारभूक्षेत्रकेऽपि वा ॥५४२॥
सीरकृष्टे यथाकाले प्रायः समतले तथा । बृहदाढकबीजानि माषबीजानि वा तथा ॥५४३॥
मुद्गबीजानि चणकतिलगोधूमबीजकम् । कुलुत्थबीजानि तथा कीरबीजं च कोद्रवम् ॥५४४॥
बीजानि यवराणां च मरीचीबीजकान्यपि । तूलेरंढकबीजानि जीरकाणां च बीजकम् ॥५४५॥
बीजानि सर्षपादीनां तारक्षेत्रस्थलेषु वा । वापयेयुर्यथाकालं पङ्क्तिशः पङ्क्तिशः क्रमात् ॥५४६॥
सीताश्रेणीषु वा नानारेखाश्रेणीषु वा पुनः । जलसिक्तानि बीजानि कानिचित्कृषिकोविदाः ॥५४७॥

---

1 मा 2 ग

असिक्तां च जले तद्वत् कांश्च सद्बीजकावलिम् । वापयेयुर्यथाकालं स्वदेशाचारवैभवात् ॥५४८॥

उप्त नामेव भूभागे द्विविधे तत्रतत्र तु । बीजानामङ्कुरोत्पत्तिमालोक्य कृषिकारिणः ॥५४९॥ 1

एकमासेन वा किंचिन्न्यूनाधिक्य क्रमान्विते । काले तले तु सर्वत्र प्रचुराणि तृणानि हि ॥५५०॥ 550

कृषीवलास्तानि वीक्ष्य करशंकुलकादिभिः । छित्वा भित्वा समूलंचबहिरुध्दृत्य तत्स्थलात् ॥५५१॥

तृणादीनि ततस्तत्र जलसेचनमाचरेत् । बीजावापानन्तरं तु चाढकादिस्थले भुवि ॥५५२॥

वृष्ट्याधिक्यं यदि तदा बीजनाशो भवेध्द्रुवम् । अतः स्वल्पं जलकणावलिसेचनमुत्तमम् ॥५५३॥

कुल्यानीरेण वा चेत्तत् कल्प्यंमाहुर्मुनीश्वराः । तिलगोधूमचणकमाषमुद्गाढकावलेः ॥५५४॥ 2

बीजानां नाशजनके सन्निरस्ते तृणादिके । तदा शाखोपशाखानां अङ्कुरादङ्कुरान्तरम् ॥५५५॥

मूले पुष्कलसारं च कलयेत् कलमादिवत् । अतस्तृणानां कन्दानां शत्रूणां निवहे हते ॥५५६॥

माषादिदण्डशाखादिवर्धनं किल निश्चितम् । तदानिमेव शोभादिः पुष्पादिश्च मनोहरः ॥५५७॥ 3

पुष्पोद्भवानन्तरं तु कणिशानां च सन्ततिः । कपिशेष्वाढकादीनामुत्पत्तिश्च विलोकिता ॥५५८॥

मासत्रयेण कालेन क्वचित् तदधिकेन वा । माषाढकादिचणक गोधूमोत्पत्तिरीरिता ॥५५९॥

मूलस्थले तु सलिलसेकवैभवतो भुवि । अन्तः सारो भवत्येव कपिशानामितीरितः ॥५६०॥ ॥560॥

एवं माषाढकंतिलप्रादुर्भावस्तु भूतले । सर्वत्र दैवयोगेन निर्मितः शास्त्रदर्शितः ॥५६१॥

अन्तसारे घनीभूते माषादिश्रेणिका क्रमात् । फलाय दृष्टः सर्वत्र पङ्क्तिरा कणिशांचले ॥५६२॥ 4, 5, 6

---

1 प्ता 2 ल्प्य 3 नी 4 न्तः 5 ष्टा 6 शः

तदा पत्रादिपतनं जीर्णता पतनं तथा । शिरस्तलानां नमनं निर्दिष्टं कृषिकोविदैः ॥५६३॥

कालानुगुणमेवं तु जलसेचनमाचरेत् । तिलानामपि गोधूमराशीनां तारभूमिके ॥५६४॥

कणिशादिप्रवेशश्च कालभेदश्च निश्चितः । जातिभेदो रूपभेदः कृषिभेदस्तथा क्वचित् ॥५६५॥

विज्ञेयः स्थलभेदेन कृषियोग्या तदर्हका । आढकादिघनीभूते कणिशानां गणे तथा ॥५६६॥

सुपक्के क्षेत्रभागेषु तत्कृन्तनमुदीरितम् । भृत्यैर्वीरैं रक्षकैश्च फलकाले तु रक्षणम् ॥५६७॥

महाफलाय भवति धान्यादि वदिहोदितम् । छिन्नानां त्रुटितानां च कणिशानां खलस्थले ॥५६८॥

दण्डाद्यैर्मर्दनं प्रोक्तमातपै शोषणं तथा । आढकीदण्डकाण्डादीन् वृषाश्वादिचतुष्पदाम् ॥५६९॥ 1

भक्षणार्थमिहादिष्टान् रक्षेयुश्च कृषीवलाः । पुञ्जीकृत्य खलस्थाने स्वग्रहेस्वोचितस्थले ॥५७०॥ ॥570॥ 2

गोष्ठचत्वरभागेषु चाथवा स्थलयोग्यकम् । आढकीदण्डकाण्डादिरक्षणं च सुखप्रदम् ॥५७१॥ 3

व्रीहिदण्डपलालादीन् आढकीदण्डकाण्डकान् । माषगोधूमचणकपत्रदण्डादिकानपि ॥५७२॥

चतुष्पाज्जीवदान् पुष्टिप्रदानपि च सर्वथा । सर्वर्तुष्वपि पश्वादेरारोग्यसुखदायकान् ॥५७३॥ 4

पुञ्जीकुर्याच्च रक्षेच्च कार्यज्ञस्तु कृषीवलः । क्षुद्रग्रामकटुग्रेवविहीनान् तु कृषीवलः ॥५७४॥ 5

शूर्पादिविन्यासयोगात् वातवीजनतोऽपि वा । पेचनाच्चामनाद्वापि निर्मलीकृतरूपकान् ॥५७५॥ 6,7

गोधूमतिलमाषादीन् आढकीसर्षपादिकान् । कीरान् मुद्रान्धान्यांश्च पुञ्जीकुर्यात् खलस्थले ॥५७६॥ 8

स्वग्रहं चानयेदेतान् आतपे शोषितान् तथा । निर्मलीकृतदेहांश्च चणकाढकमुद्गकान् ॥५७७॥

---

1 पे 2 गृ 3 यो 4 ष्टि 5 Not intelligible 6 Not clear 7 ख 8 द्रा

व्यञ्जनाय तथा सज्जान् भाण्डेषु च पृथक्पृथक्। स्थापयेद्रक्षयेत् काले सुखसिद्दये कृषीवलः॥५७८॥ 1

धान्यादीनाढकादींश्च मरीच्यादीन् भूवः स्थले। देशाचारवशादेवं युक्त्या च कृषिकोविदाः॥५७९॥ 2

तत्तज्जातिस्वरुपानुगुणं च स्थलयोग्यकम्। कालानुगुणमन्यांश्च कृषिलभ्यान् विशेषत॥५८०॥॥580॥ 3 4

संपादयेयुः ग्रामेषु पुरेषु नगरेष्वपि। तदन्तिकस्थले क्षेत्रभागेषु विविधेष्वपि॥५८१॥

कृष्यादानं तु नियमात् महाफलमुदीरितम्। जलभूमौ तथा तारभूमौ वा कृषियोग्यकाः॥५८२॥

प्रतिदेशं प्रतिग्रामं कोद्रवं यवरं तथा। यवं च वर्धयेत्काले तद्दान्यमपि पुष्टिदम्॥५८३॥

तत्काण्डदण्डः पश्वादिजीवानां जीवनप्रदः। अतः सर्वेषु देशेषु कोद्रवं यवरं वरम्॥५८४॥

पुष्टिप्रदं महासारं वर्धयित्वा विशेषतः। अगस्त्यमिक्षुदण्डांश्च स्थलयोग्यं च वर्धयेत्॥५८५॥

महाफलप्रदं चेक्षुकृषिकर्म प्रशस्यते। गजानां परमाधारं शर्करागुडकारणम्॥५८६॥

इक्षुदण्डं दृढं कालवर्धनम् जलभूमिषु। अथवा तारभूभागे क्वचित् क्षेत्रे विशेषतः॥५८७॥

दीर्घावटश्रेणिकं तु कृत्वा तत्र निखातयेत्। कदलीनां च सर्वत्र पुण्ड्रेक्षूणामिह क्षितौ॥५८८॥

न बीजकलनं दृष्टं प्रत्यक्षं वापि शास्त्रतः। शरत्काले तथान्यत्र समये देशचोदिते॥५८९॥

कृषीवलैरिक्षुदण्डस्थापनं चावटस्थले। स्थापनं सलिलासेकपूरणं च क्रमोदितम्॥५९०॥॥590॥

गते दशदिने काले तन्मूलादंकुरोभ्दवः। इक्षुदण्डाङ्कुरवशात् दलादीनाम थोद्रमः॥५९१॥ 5

मासद्वयेन वा मासत्रयेणापि क्वचित्स्थले। संपूर्णदलवृद्दिस्तु निश्चिता फलदायिनी॥५९२॥

---

1 द्द्यै 2 भु 3 रू 4 तः 5 द्र

पुरुषाकृतिकौन्नत्यमधिकोन्नतिरेव वा । इक्षुदण्डावलीवृद्धिं ज्ञात्वा कृषिविचक्षणः ॥५९३॥

तन्मूले चावटे भागे नित्यं सलिलसेचनम् । कल्पयेद्यत्नतः काले रक्षयेच्च विशेषतः ॥५९४॥

वातादिभिस्तथा चैषामिक्षूणां रक्षणं परम् । एवं प्रकारः कथितः कदलीनामिह क्षितौ ॥५९५॥

कदली फलदा शश्वत् तज्जातिर्विविधा मता । देशाचारवशात्कालयोगाच्च कृषिकोविदाः ॥५९६॥

कदलीमिक्षुकाण्डं च सर्वर्तुष्वपि वर्धयेत् । सततं फलदं प्रोक्तमेतत्सर्वत्र देशके ॥५९७॥

क्वचित् पर्वतसानौ वा गिरिमूर्धनि वा क्वचित् । कठिनस्थलके भूमिसारं ज्ञात्वा विचक्षणः ॥५९८॥

कदलीमिक्षुकाण्डं च वर्धयेत्सुखसिद्धये । सततं फलदं प्रोक्तमेतत्सर्वत्र भुमिषु[1] ॥५९९॥

न तूषरस्थले भूमिदोषदुष्टे तु वर्धयेत् । अतः सल्लक्षणोपेते भूभागे तु विचक्षणः ॥६००॥ ॥६००॥

सूपप्रधानान् चाणकाढकमुद्रादि[2]मान् क्वचित् । वर्धयेद्रक्षयेत्तत्र फलितान् स्वगृहं नयेत् ॥६०१॥

पिचुवृक्षं तूलवृक्ष तथा तच्छ्रेणिकामपि । कार्पासवस्त्रसिद्ध्यर्थं तारभूमौ क्वचित्स्थले ॥६०२॥

तथोष्णस्थलके चैव वर्धयेस्तु[3] कृषीवलः । यत्सुखप्रदमादिष्टं पारंपर्योपदेशतः ॥६०३॥

साक्षाद्वीक्षणतो वापि तत्सर्वं वर्धयेत्कृती । खलभूमितटे वापि ग्रामान्ते ग्रामसीमनि ॥६०४॥

आक्रीडान्तः स्थले वापि स्थले समुचिते तथा । जलाशयतटप्रान्ते चोत्तुङ्गे ग्रामवास्तुके ॥६०५॥

कार्पासवृक्षवृद्धिश्च तथान्यद्वर्धनं क्रमात् । शस्तमित्यवमादिष्टं[4] शास्त्रज्ञैर्मुनिपुङ्गवै ॥६०६॥

इति कात्यपीयकृषिसूक्तौ[5] धान्यादिकृषिक्रमकथनं नाम प्रथमो भागः ॥

---

1 भू 2 द्गा 3 त्तु 4 त्ये 5 श्य

## अथ शाकादिकृषिक्रमकथनं नाम द्वितीयो भागः ॥

काश्यप उपदिशति -

कृषिकार्यक्रमविदो लोके सर्वत्र भूमिषु । सल्लक्षणैर्भासुरासु नृपाज्ञावर्तिनः सदा ॥१॥

शालिक्षेत्रे यथाकालं शाल्यादीन् कलयेत् क्रमात् । तारक्षेत्रेषु तदुच्च चणकादींश्च[1] वर्धयेत् ॥२॥

एतेन भोजनोपायः समग्रः परिकल्पितः । शालितण्डुलवर्गैश्च संभारद्रव्यकैस्तथा ॥३॥

आढकाद्यैश्च तत्पूर्तिः नैव दृष्टः[2] क्ष्मातले । अतः शाकादिकान् स्वादुरसान् तत्रविवर्धयेत् ॥४॥

जटिकान् राशिजटिकान् वल्लिका वनवल्लिकाः । पटोलिकांश्च वार्ताकान् षवकांश्चं तथैव च ॥५॥

शाकांश्च विविधान् तद्वत् कूश्माण्डांश्च कलाटकान् । कुस्तुंबुरुन् कलाटांश्च सूरणान् शाकुटांस्तथा ॥६॥

हरिद्राश्चापि शृण्ठांश्च स्थलवन्यप्रभेदकान् । स्थलीभवांश्च विविधान् रसपूर्णान् कृषीवलान् ॥७॥

कृषिक्रमाद्वर्धयेयुः भोज्यकार्यार्थसिध्दये । एतानि शाकद्रव्याणि मुख्यानीति मतिर्मम ॥८॥

क्वचिद्देशेषु शाकादिः जातिरुपप्रभेदतः[3] । रसतो वर्णतश्चैव भिन्नः संपरिकीर्तितः ॥९॥

पलाण्डुं वर्धयेत् द्राक्षानलदैलादिवर्धनम् । कृषीवलैस्तु कर्तव्यं तत्र तत्र स्थलीष्वपि ॥१०॥ ॥10॥

तारभूमितले वापि जलभूमितलेऽपि वा । ऋतुयोग्यं देशयोग्यं पारंपर्यक्रमोभ्दवम् ॥११॥

रीतिं च विज्ञाय बुधः शाकद्रव्यं विवर्धयेत् । प्रथमं तण्डुलद्रव्यं सूपद्रव्यं द्वितीयकम् ॥१२॥

---

1 न्श्च 2 ष्टा 3 रू

शाकद्रव्यं तृतीयं स्यात् कृष्यादानक्रमोऽद्भवम् । घृतक्षीरदधिद्रव्यं चतुर्थं च समीरितम् ॥१३॥

एतच्चतुर्विधं द्रव्यं भोज्यकल्पः प्रकीर्तितः । सर्वेषामिह देवानामेतत् प्रीतिविवर्धनम् ॥१४॥

मनुष्याणां तु सर्वेषां जीवनस्थैर्यकारणम् । पुष्टिदं चारोग्यदं च बुद्ध्यायुर्वर्धनं तथा ॥१५॥

सृष्टिकाले ब्रम्हणा तु सृष्टः सर्वत्र भुमिषु । अनेन भोज्यकल्पेन वसुधा तु सजीवना ॥१६॥

ब्रम्हणः सृष्टिसाफल्यमभवच्च तदादितः । सर्वेष्वपि देशेषु क्षेत्रेषु विविधेष्विह ॥१७॥

मुनीश्वराणां यमिनां मनुष्याणां च सर्वत्रः । त्रिवर्गफलदश्चायं भोज्यकल्पः प्रकीर्तितः ॥१८॥ [1]

तस्माच्छाकद्रव्यकादिकृषिश्चापि कृषीवलैः । कल्पनीया विशेषेण ग्रामेषु नगरेष्वपि ॥१९॥

वने वनान्तरे वापि सल्लक्षणसमन्विते । जनावासान्तिकस्थाने जलाधारे विशेषतः ॥२०॥ ॥२०॥

शाकादिकृषिकार्यं च फलदं च विनिश्चितम् । वसन्तकाले ग्रीष्मे वा हेमन्ते वापि वा क्वचित् ॥२१॥

वार्ताकवल्लीजटिकमरीचीषवकादिभिः ॥ सीरकृष्टं क्षेत्रतलमभ्चायेदङ्कुरार्थिभिः ॥२२॥

वार्ताकादीनि बीजानि चातपे शोषितानि तु । गोशकृत्कादिभिः सारमेदुरे भूतले क्वचित् ॥२३॥

अङ्कुरार्थं विन्यसेयुः जलसेकं च कोविदाः । यथाक्रमं कारयेयुः पलालाच्छादनं ततः ॥२४॥

एवं दिनत्रये काले गलिते त्वङ्कुरस्थले । अङ्कुराणां दर्शनं तु क्रियते विधिना किल ॥२५॥

दिनविंशतिके काले दृढमङ्कुरजालकम् । सीरकृष्टे स्थले योग्यं चोत्खात्वा स्थापयेत् बुधः ॥२६॥

तदानीमेव मूले तु जलसेकस्तु जीवदः । आलवालक्रमस्थाने वार्ताकादींस्तु वर्धयेत ॥२७॥

1 तः

पटोलिकां वल्लिकां च लतारूपप्रवर्धिनीम् । वर्धयेद्वल्लिकावृद्धयै कायमानस्वरूपके ॥२८॥ [1] [2]

ग्रीष्मकाले जलक्षेत्रे वर्षाकालं विना बुधः । कालान्तरेष्वपि तथा शाकद्रव्यकृषिः शुभा ॥२९॥

शाकुटानां तु कन्दं च सूरणानां च कन्दकम् । हरिद्राकन्दकं चैवमावाले वा प्रकल्पयेत् ॥३०॥ ॥30॥

स्थले वा चोष्णभूम्यास्तु कृषिकर्मफलप्रदम् । इत्थं लतारूपकाणां कृषिश्च विविधा मता ॥३१॥ [3]

कूश्माण्डं वनकूश्माण्डं एलानलदमुख्यकान् । वर्धयेत्तारभूभागे नागवल्लीमपि क्वचित् ॥३२॥

कदलीमिक्षुदण्डं च नागवल्लीं च पूगिकाम् । जलक्षेत्रे तथोद्याने चाक्रीडे वर्धयेद्बुध ॥३३॥ [4]

रम्भां च मोचां फलदां पनसं लिकुचं तथा । रसालमाम्रं च तथा जम्बूमपि च वर्धयेत् ॥३४॥

नारिकेलतरूंश्चापि पालयेत् कृषिकर्मवित् । गृहाणां निष्कुटे वापि चारामे वा क्वचित्स्थले ॥३५॥

तारभूमिस्थले वापि जलभूमितले क्वचित् । यथास्थलप्राप्तिलोके ब्राम्हणाः क्षत्रियास्तथा ॥३६॥

वैश्याश्च शूद्राः संकीर्णजातिजा अपि मानवाः । व्याधादयश्च वीराश्च यथाशक्ति स्वभूमिके ॥३७॥

धान्याकं सूरणं वल्लीं कूष्माण्डं च पटोलिकाम् । वर्धयेत् शास्त्रनिर्दिष्टान् जटिलादीन् यथाक्रमम् ॥३८॥

प्रथमं भूकर्षणं तु द्वितीयं गोशकृत्कणम् । तत्र क्षिपेश्च भूसारकलनार्थमिदं विदुः ॥३९॥

तत्र क्षेत्रे बहुमुखमालवालप्रकल्पनम् । आलवालां चलस्थाने वार्ताकादिनिवेशनम् ॥४०॥ ॥40॥

मालतीकुन्दचाम्पेयकुटजादिस्थलेष्वपि । आलवालं बहुमुखं कल्पयेत्स्थलयोग्यकम् ॥४१॥

आलवालाञ्चले बीजस्थापनं वाङ्कुरार्पणम् । देशाचारवशात्कालयोगादेवं प्रकल्पयेत् ॥४२॥

---

1 रू 2 रू 3 रू 4 धः

ततो गते मासकाले वार्ताकादेस्तु मूलतः । तृणादिवैरिसंघस्य निरासश्च प्रकीर्तितः ॥४३॥

दिनपञ्चककालं वा दिनषट्कमथापि वा । वार्ताकादेस्तु मूलेषु चालवालमुखात् बुधः ॥४४॥

जलानां सेचनं कुर्यात् ग्रीष्मकाले विशेषतः । मुहुर्मुहुस्तोयदानं तृणकोष्ठ निरासकः ॥४५॥

महाफलाय निर्दिष्टमृषिभिः शास्त्रकोविदैः । शाकादिपत्रजालेषु वार्ताकानां तथा क्वचित् ॥४६॥

पटोलिकानां वल्लीनां षवकानां तथैव च । कूश्माण्डानां कलाटानां सूरणानां तथैव च ॥४७॥

शाकुटानां हरिद्राणामार्द्रकाणामपि क्वचित् । पत्रजालेषु कीटादिभक्षणं दृश्यते नरैः ॥४८॥

अतस्तत्कीटदोषादिनिरासार्थं कृषीवलाः । भस्मधूली क्षेपणं वा सुधासलिलसेचनम् ॥४९॥

कारयेत् क्रमतः काले देशाचारवशात्तथा । बीजानां स्थापने चापि तृणादिक्षेपणे तथा ॥५०॥ ॥50॥

लतादि पालने चापि पुष्पाविर्भावकालिकम् । यत्कर्म निश्चितं लोके क्रियते कार्यकोविदैः ॥५१॥

स्वयं निरीक्ष्य तत्सर्वं पारंपर्योपदेशतः । पटोलिकासु वार्ताक कूश्माण्डादिषु भूतले ॥५२॥

जंबीरलिकुचादीनामेलाद्राक्षादिकेष्वपि । द्राक्षाखर्जूरिकादीनां कृष्यादिषु सुबुद्धयः ॥५३॥

देशाचारं क्रमप्राप्तमृतुयोग्यं कृषिक्रियाम् । कलयेयुः भोज्यखाद्य स्वाद्यादिसुखहेतवे ॥५४॥

तेषु केचित् पत्ररुपाः सुरसाः परिकीर्तिताः । परे तु पुष्परुपाः स्युरन्ये तु फलरुपिकाः ॥५५॥ 1

अन्ये लवकरुपाः स्युरित्तरे कन्दरुपकाः । पुष्पोदये पुष्पमध्ये पुष्पनाशे तथा क्रमात् ॥५६॥ 2

केचित् खाद्याश्च पेयाश्च कदल्यां तु विशेषतः । कदलीकन्दकाण्डं च पुष्पं लवकमेव च ॥५७॥

---

1 रू 2 रू

फलं च कन्दकं वापि स्वादु रुच्यं च सर्वदा। भोज्यं निर्दिष्टमेतत्तु मुनिभिस्तत्त्वदर्शिभिः ॥५८॥
पटोलिकानां लवकं वार्ताकानां तथैव च। शाकानां षवकानां च बाल्ये स्वादुतरो रसः ॥५९॥
अतो लवकमेतेषां प्रशस्तं परिकीर्तितम्। पनसानां रसालानां कूश्माण्डानामपि क्वचित् ॥६०॥ ॥60॥
लवकं मध्यवयसि रसः स्वादुतरा मतः। इक्षूणां नारिकेलानां लिकुचानां तथैव च ॥६१॥
रसालप्रमुखादीनामन्त्ये वयसि भूतले। तेमनादिक्रियायोग्यरसस्तत्र निरूपितः ॥६२॥ 1
एवं स्वदेशाचरणं स्वस्वजातिक्रमादपि। यदुक्तं पाकशास्त्रेषु कालद्रव्यादियोगतः ॥६३॥
स्वशरीरस्थपित्तादिगुणदोषवशादपि। कृषिक्रमविदो लोके पटोलादिकृषिं तथा ॥६४॥
रक्षयेयुः गृहे क्षेत्रे चाक्रीडे स्वीयभूतले। केदारेष्वपि वा वापीहृदादीनां तटेष्वपि ॥६५॥
जलाशयस्याधस्थात्तु तन्मुखे वा विशेषतः। कदलीपूगपुंनागनारिकेलाम्रवृक्षकान् ॥६६॥
पनसेलाद्राक्षकादीन् मालत्यादीन् विशेषतः। वर्धयेद्वार्ताकवल्लीकूश्माण्डानपि युक्तितः ॥६७॥
नानाशाकान् तथा पेयान् खाद्यान् चर्व्यानपि क्वचित्। कृष्यादानक्रमवशात् रक्षयेत् पालयेदपि ॥६८॥
देशेदेशे च सर्वत्र वसन्ते ग्रीष्मकेऽपि च। वर्षाकाले शरत्काले हैमन्ते चापि वा क्वचित् ॥६९॥
शिशिरेऽपि स्वकीयेषु क्षेत्रेषु विविधेष्वपि। प्रकृत्वा चालवालादीन् तत्तत्कालानुरुपतः ॥७०॥ ॥70॥ 2
शाकं पत्रं त्वचं पुष्पं कन्दं वा रसमेदुरम्। आरोप्य पुष्टिजनकं कृष्यादानवशाद्भुवि ॥७१॥
पालयेयुः कृषिविदः गृह्णीयुः फलमुत्तमम्। एलालवङ्गार्द्रकादीन् पूगान् ताम्बूलवल्लिकाः ॥७२॥

---

1 रू  2 रू

इक्षुकाण्डांश्च कदलीरन्याश्च विविधा लताः। केदाराञ्चलभागेषु तारभूभागिकेऽपि वा ॥७३॥
जनोपकारकानन्यान् पिप्पलीप्रमुखानपि। नानाविधाश्चोषधीनां लताश्च प्राणवर्धकाः ॥७४॥
वर्धयेयुर्विशेषेण तत्तत्क्षेत्रानुरूपतः। यथाकालं यथाचारं पूर्वसूर्युपदेशतः ॥७५॥ [1]
कृषिसाध्यं प्राणिवर्गसुखदं यन्निरूपितम्। शास्त्रेषु मुनिभिः पूर्वैः तत्सर्वं तु कृषीवलाः ॥७६॥ [2]
युक्त्या स्वस्वक्षेत्रभागे वर्धयेयुः प्रयत्नतः। स्वीयस्वीयकुटुम्बानां रक्षार्थं ब्राम्हणैरपि ॥७७॥
प्रीत्यर्थमपि देवानां क्षत्रियैर्वैश्यकैरपि। शूद्रैरन्यैश्च भूलोके कल्प्या कृषिरुदीरिता ॥७८॥
शास्त्रेष्वपि निबध्दा च मुनिभिस्तत्त्वदर्शिभिः। सृष्टिकर्त्रा ब्रम्हणा तु कल्पादौ विविधानि तु ॥७९॥
बीजानि सृष्टानि भुवि धृतान्यथ विशेषतः। भूमिदेव्या प्रजासृष्टिप्रार्थनापूरणाय हि ॥८०॥ ॥४०॥ [3]
एकं बीजं तु बहुधा रूपभाक् च भविष्यति। बहुधा फलदं नृणां भविष्यति न संशयः ॥८१॥ [4] [5] [6]
इति भूम्या विष्णुपत्न्या पूर्वमुक्तं च तच्छ्रुतम्। कृषिशास्त्रं तु भूम्योक्तं नीतं तन्मुनिभिः क्षितिम् ॥८२॥
तच्च संरक्षितं भूपैः लोकरक्षाधुरंधरैः। अधीतं तच्च कालेन शूद्रकैस्तु विशेषतः ॥८३॥
तदादि बहुधा शास्त्रं कृष्याख्यं मुनिवासिभिः। पर्जन्यकालानुगुणं विस्तृतं रक्षितं च तत् ॥८४॥
एवं कालेन महता नानादेशेषु मानवैः। प्रत्येकं कृषिशास्त्रे तु चाधीतं भक्तिपूर्वकम् ॥८५॥
कृषिश्च कलिता स्वीये क्षेत्रे केदारकेऽपि च। फलं च लब्धं संपूर्ण पोषिता जीवराशयः ॥८६॥

---

1 रू 2 वैः 3 धृ 4 हु 5 रू 6 नृ

स्वप्रजाश्च विशेषेण देवभूपालसाहाय्यतः । अतः सर्वत्र देशेषु कृषिकर्मणि भूमिपैः ॥८७॥
उत्तमं साहाय्यमादिष्टं मुनिभिः कथितं पुरा । विना राज्ञां तु साहाय्येन कृषिर्भूमण्डले तथा ॥८८॥
देशे वा नगरे ग्रामे न संपूर्णफलेरिता । प्रत्यक्षतश्च दृष्टं च प्रजाभिर्भृत्यकैरपि ॥८९॥
अतः सर्वत्र भूपालैः कृषिसाहाय्यं महाफलम् । कर्तव्यं मण्डलानां च राष्ट्राणां क्षेमसिद्धये ॥९०॥ ॥90॥
स्वात्मक्षेमादिवृद्ध्यर्थं यशसे च पराय च । देवानां प्रीतये चापि स्वधर्मस्थैर्यहेतवे ॥९१॥
विप्रेभ्यः श्रोत्रियेभ्यश्च नानागोत्रेभ्य एव च । भूदानं गोप्रदानं च कुल्याखननमेव च ॥९२॥
कृषिकर्मण्यशक्तानां विप्राणां च विशामपि । शूद्राणामपि चान्येषां हितायानेकरूपकम् ॥९३॥
कृषिसाहाय्यं तु कर्तव्यं राजधर्मानुसारतः । वापीकूपतटाकानां ह्रदानां खननं तथा ॥९४॥
जलाशयानां च तथा घटीयन्त्रप्रकल्पनम् । सस्यविध्वंसकानां तु तस्कराणामनेकधा ॥९५॥
दण्डश्च शुद्धसत्त्वानां यशसे धर्मसिद्धये । एवं बहुविधं साहाय्यं कृषिकर्मणि निश्चितम् ॥९६॥
तत्सर्वं भूमिपालैस्तु कर्तव्यं मुनिभाषितम् । यस्मिन् ग्रामे नगर्यां वा देशे वाथ क्वचित्स्थले ॥९७॥
कृषिकर्मण्यशक्तानां प्रजानाम् रक्षणाय च । जनबाहुल्यनगरराजधान्यादिवास्तुके ॥९८॥
उपकाराय वा भूपाः सारक्षेत्राण्यनेकधा । क्षेत्राणां मण्डलं वापि द्विविधानां महीतले ॥९९॥
स्वीकृत्य कृषिकार्यार्थं यथाकालं यथाक्रमम् । नियोजयेयुः स्वान् भृत्यान् प्रजाश्चापि विशेषतः ॥१००॥ 100
संकीर्णजातिजान् रिक्तान् शूद्रांश्चापि कृषिस्थले । योजयित्वा तत्रतत्र धान्यादीन् विविधानपि ॥१०१॥

आढकादीनपि तथा शाकादींश्च क्वचित्स्थले। मल्लीचम्पकमुख्यानि कुसुमान्यपि युक्तितः ॥१०२॥

अमितं वर्धयेयुः स्वप्रजाक्षेमाभिवृद्धये। शाकादिद्रव्यराशिं च धान्यादीनां च राशिकम् ॥१०३॥

आढकीचणकादीनां राशिं च तिलराशिकम्। माषसर्षपराशिं च तथा द्राक्षादिपुञ्जकम् ॥१०४॥

विविधानां फलानां च पुञ्जं च समयोद्भवम्। सज्जीकृत्य नराणां हि सुखाय स्थापयेन्नृपः ॥१०५॥

आपणस्थानके वापि तदर्थं निर्मिते स्थले। सचत्वरे साङ्गणे वा निरावरणकेऽपि वा ॥१०६॥

निषद्यासु तथा शालानिर्माणेष्वपि वा क्वचित्। सर्वं द्रव्यं च पूर्वोक्तं यच्चान्यत्सुखदायकम् ॥१०७॥

कम्बलं वस्त्रजालं च दधिक्षीरादिकं तथा। भोज्यद्रव्यं च विविधं चर्व्यं खाद्यं च यम्द्भुवि ॥१०८॥

कृष्यादानवशात्प्राप्यं गुडं तैलं हितप्रदम्। यच्चान्यत् द्रव्यमत्रोक्तं तत्सर्वं भूमिवल्लभः ॥१०९॥

ग्रामे पुरे च नगरे राजधान्यां विशेषतः। निषद्यादिस्थानकेषु यानीयात्तु क्रियार्हकम् ॥११०॥ ॥110॥

स्थापयित्वा विशेषेण वैश्यान् वाणिज्यकोविदान्। क्रयार्थं विक्रयार्थं च योजयेत् धनिकान् नृपः ॥१११॥

वसन्तादिषु मासेषु यद्यत् प्राप्यं कृषिक्रमात्। यन्त्रादिभिश्च यत्प्राप्यं यत् प्राप्यं तन्तुवायकान्[1] ॥११२॥

तैलकाराच्च यत् प्राप्यं तत्सर्वं पृथिवीपतिः। मालाकाराच्च यत प्राप्यं गन्धद्रव्यादिकं भुवि ॥११३॥

संपादयित्वा तत्सर्वं प्रजानां सुखसिद्धये। ग्रामे पुरे च नगरे राजधान्यां विशेषतः ॥११४॥

आपणादिषु शालासु चाङ्गणे विविधेऽपि च। स्थापयेत् रक्षयेत् राजा वैश्यान् तत्र नियोजितान् ॥११५॥

प्रस्थं च कुञ्जं द्रोणं च नाडिकं क्षुद्रमेव च। धान्याढकादिद्रव्याणां कलनार्थं प्रकल्पयेत् ॥११६॥

---

1 त्

अयः पट्टैः सारदारुफलकाभिर्महीपतिः । प्रस्थादिकं कारयेच्च देशे सर्वत्र योजयेत ॥११७॥
तैलादितोलनार्थं च पलंकारं तथैव च । अयःखण्डेन क्लृप्तं च सर्वत्र सममानकम् ॥११८॥
तुल्यरूपं तुल्यदरं देशे तत्र नियोजयेत् । तत्प्रमाणं च वैश्येषु ग्राम्येष्वपि जनेषु च ॥११९॥ 1
निवेदयेत् भृत्यवर्गैः ब्राम्हणाद्यैर्विशेषतः । तुलादण्डं च कांस्यं वा पित्तलं वा विशेषतः ॥१२०॥ ॥120॥
शाकादितोलनार्थं च राजा सर्वत्र योजयेत् । अमात्यप्रमुखे राजा पलं प्रस्थादिकं क्रमात् ॥१२१॥
अङ्कयित्वा विशेषेण देशे सर्वत्र योजयेत् । धान्यादीनां क्रियज्ञानं पणज्ञानं तथा नृपः ॥१२२॥ 2
उद्घोषयेच्च सर्वत्र देशेदेशे विशेषतः । प्रतिग्रामं प्रतिगृहं प्रजासौख्याय युक्तितः ॥१२३॥ 3
धान्यादिद्रव्यराशिनां तैलादीनां तथैव च । वस्त्रादीनां च शाकादिद्रव्याणां च कृषिक्रमे ॥१२४॥ 4
यत्साहयं विविधं शास्त्रनिर्दिष्टं मुनिभिः पुरा । तत्सर्वं पृथिवीपालः कल्पयेत् क्षेमसिद्धये ॥१२५॥
कृषिं विना न भूलोके द्विपदां च चतुष्पदाम् । सुखादिर्न भवेदेव निश्चितं शास्त्रपारगैः ॥१२६॥
तस्मात् देवप्रीणनार्थं प्रजानां रक्षणाय च । कृषिकर्मण्युपरतिः नृपाधीना च निश्चिता ॥१२७॥
पुरोहितैः ब्राम्हणैश्च सचिवैर्वा विशेषतः । महीपतिः क्षत्रियो वा प्रजारक्षा धुरंधरः ॥१२८॥
सर्वकार्येषूत्तमं तु कृषिकर्म प्रशस्यते । तत्पालयेत् स्वदेशेषु यत्नतो युक्तितः क्रमात् ॥१२९॥
एवं महीपतिर्युक्त्या ग्रामे वा नगरेऽपि वा । राजधान्यां विशेषेण निष्कुटं वनमेव वा ॥१३०॥ ॥130॥
पुरस्य च बहिर्देशे मध्ये वा वृक्षवाटिकाम् । अन्तःपुरस्थप्रपदालीलार्थं वा विशेषतः ॥१३१॥ 5

---

1 रू 2 क्र 3 द्घो 4 शी 5 म

आरामं स्थापयेत् धीनाम् वनान्ते वृक्षवाटिकाम् ।साराणां चन्दनादीनां वृक्षाणां वर्धनार्दपि ॥१३२॥ 1

ग्रहनिर्माणसाहयं च प्रजानां परिकल्पयेत् । प्रासादोद्यानभागेषु मनोज्ञान् फलमेदुरान् ॥१३३॥ 2

वृक्षांस्तु विविधान् भूपो वर्धयेयुर्यथाक्रमम् । रम्भां च मोचां जंबीरं मातुलुंगां च पिप्पलीम् ॥१३४॥ 3/4

अन्याश्चोषधिवल्लीश्च नलदानपि वर्धयेत् ।कुशान् काशांश्च विविधान् तुलसीर्बिल्वकानपि ॥१३५॥

कुसुमानि च पूजार्हान्यनेकानि च भूमिपः ।काललभ्यानि गन्धाढयानपि सर्वत्र वर्धयेत् ॥१३६॥

कुटुम्बारोग्यदायीनि युक्त्यान्यानि च वर्धयेत् । देवोद्यानं देवभूमावुत्सवाय प्रकल्पयेत् ॥१३७॥

ग्रामस्यान्तःस्थले वापि बहिर्वा तत्प्रकल्पयेत् । यथा स्थलंवशाद्भूपो देशाचारवशादपि ॥१३८॥

एवं प्रासादभूम्यां तु प्रमदावनमुत्तमम् । मनोज्ञवृक्षषण्डाढ्यं मालत्यादिविराजितम् ॥१३९॥

स्थापयेदेवमन्यत्र राजधान्या बहिःस्थले । तच्च भूपः स्थापयेच्च प्रजानन्दविवर्धनम् ॥१४०॥ ॥ 140 ॥

एवं वने वनान्ते वा गिरिसानुतटेऽथवा । महावनं स्थापयेच्च नानावृक्षसमुज्ज्वलम् ॥१४१॥

नानावृक्षावलीबीजरक्षणं तत्र निर्दिशेत् । फलैः पुष्पैश्च फलकादारुखण्डादिभिर्नृपः ॥१४२॥

प्रजानां ग्रहनिर्माणसाहयं तेन विनिश्चितम् । तस्मात् सर्वत्र देशेषु भूमिरक्षाधुरंधरः ॥१४३॥ 5

विशालभूमीभागेषु सीमाभित्तियुतेषु वा । करञ्जकान् नक्तमालानेरण्डान् भूर्जकानपि ॥१४४॥ 6

अर्जुनान् सर्जकान् नीपान् कदम्बानपि भूरुहान् ।शिग्रून् शमान् मरुवकान् देवदारुद्रमानपि ॥१४५॥ 7

श्रीपर्णकान् तिन्दुकांश्च वटान् प्लक्षान् तथा क्वचित् ।मद्दारुनपि तथा प्रियङ्गूंश्च क्वचित् स्थले ॥१४६॥

---

[ 1 धीमान् (Suggested in the text)] 2 गृ 3 त् (?) 4 च यथा..(?) 5 गृ 6 मि 7 द्रु

विभीतकानामलकीस्तथा हैमवतीरपि । कर्णिकारांश्च लिकुचान् निम्बवृक्षानपि क्वचित् ॥१४७॥
अशोकांश्च शिरीषांश्च दाडिमानपि भूमिपः । जम्बूवृक्षान् कपित्थांश्च सर्वतो भद्रकानपि ॥१४८॥
चाम्पेयकान् कुरबकान् वर्णजानपि कर्णिकान् । तापिच्छांश्च तमालांश्च सिन्दुवारद्रुमानपि ॥१४९॥ a
तिंत्रिण्याख्यान् महावृक्षान् तथा वंशानपि क्वचित् । चूतान् रसालानाम्रांश्च बदरीन् वा विशेषतः॥१५०॥ ॥150॥
रण्यद्रुमान् मधूकांश्च पीलुवृक्षान् तथैव च । पुन्नागान् पारिभद्रांश्च कोविदारद्रुमानपि ॥१५१॥ b 1
एवं नानाजातिरूपान् वृक्षान् सारान् यथाक्रमम् । स्थापयेत् पृथिवीपालः रक्षयेत् जलसेचनैः ॥१५२॥ 2
दवाग्निबीजनात् दुष्टसत्वाच्चोरात् यथाक्रमम् । एवं महावनं रक्ष्यं नदीतीरेषु वा क्वचित् ॥१५३॥
गान्धारकुन्तिपाञ्चालकाश्मीरावन्तिभूमिषु । सिन्धुनेपालनिषधकोसलाङ्गादिभूमिषु ॥१५४॥
धूर्जरावन्तिसौराष्ट्रप्रमुखादिस्थलेषु च । देशेषु विविधेष्वेवं सारभूमिस्थले नृपः ॥१५५॥ 3
महावनं सर्ववृक्षषण्डोज्ज्वलितदिङ्मुखम् । तटाककुल्यावाप्यादिसंयुतं च समन्ततः ॥१५६॥
कृषीवलैः स्वप्रजाभिः स्थापयित्वा यथाक्रमम् । वीरैर्भटैर्योधवर्गैः रक्षयेत् सुखसिद्धये ॥१५७॥
पर्वतस्यान्तिकस्थाने वनमध्येऽथवा क्वचित् । खनिं च नानालोहानां जनयित्रीं महीपतिः ॥१५८॥
परीक्ष्य भूगर्भनाडी रक्षयेतत्र तत्र हि । अयः खण्डं पित्तलांश्च सुवर्णं रजतं तथा ॥१५९॥ 4
गैरिकानपि यत्नेन संपाद्य क्षेमसिद्धये । लोहकार्यप्रवीणैश्च लोहकारैश्च तक्षकैः ॥१६०॥ ॥160॥
सुवर्णकारैरपि च ग्रामेषु नगरेष्वपि । नानायुधानां जालनि कल्पयित्वा विशेषतः ॥१६१॥ 5

---

1 न्ना 2 रू 3 गु (?) 4 त्त 5 ला a न्धु b थ

कृषियोग्यान्यायुधानि दत्वा ग्राम्यजनाय च। पुर प्रासाददुर्गादिरक्षार्थं च महीपतिः ॥१६२॥
नानाविधप्रहरणजालं योधेष्वपि क्वचित्। सेनास्थानेषु च तथा स्थापयेत् पालयेदपि ॥१६३॥
जाम्बूनदैश्च रजतैः खनिजैः भूपतिः क्रमात्। समुद्रवीचीजनितप्रवालैश्चापि मौक्तिकैः ॥१६४॥
नानाभरणजालानि कल्पयित्वा विशेषतः। देवेभ्यः प्रथमं दत्वा ब्राम्हणेभ्यस्ततः क्रमात ॥१६५॥
स्वयं धृत्वा च महिषीं प्रासादप्रमदा अपि। तैस्तैराभरणैः काममलंकृत्य यथाक्रमम् ॥१६६॥
परमानन्दसंपन्नो रक्षयेच्च महीमिमाम्। एवं भूपस्तत्र तत्र देशे सर्वसुखावहम् ॥१६७॥
संपादयेत्तु विविधद्रव्यजालं तु सर्वतः। कल्पभेदेन वा कालक्रमेण च महीपतिः ॥१६८॥
कृषिकर्मविकल्पं च बीजावापविकल्पकम्। शीतोष्णस्थानभेदेन विभक्तां च कृषिक्रियाम् ॥१६९॥
गोप्रचारवशाद्वापि वृष्टिपातक्रमादपि। जलाधारवशाच्चैवं ज्ञात्वा बहुविधोदयम् ॥१७०॥ ॥170॥
कृषिकर्म प्रयुञ्जीत सारक्षेत्रानुसारतः। महीपाले प्रसन्ने तु सर्वं सिध्यत्ति भूतले ॥१७१॥ 1
महीपालेऽप्रसन्ने तु सर्वं नश्यति निश्चितम्। तस्मात् राष्ट्रसुभिक्षार्थी प्रसन्नः पृथिवीपतिः ॥१७२॥
कृषीवलात् करद्रव्यं पणं वा धान्यमेव वा। यथाक्रमं च स्वीकृत्य भूतलं सचराचरम् ॥१७३॥
स्वकुटुम्बसमं न्याय्यमार्गेण परिरक्षयेत्। ब्राम्हणाः क्षत्रिया वैश्याः शूद्राश्चान्येऽपि मानवाः।
कृषिक्रियासाह्यमारात् नृपात्स्वीकृत्य भक्तितः ॥१७४॥
यथाकालं यथाचारं संपाद्य च कृषिं भुवि। करद्रव्यं च दत्वा ते राष्ट्रक्षेमाभिवृद्धये ॥१७५॥

1 न्ने

देवानागन्तुकान स्वीयकुटुम्बं च यथाक्रमम् । पोषयित्वा विशेषेण धर्मो मार्गो यथोदिनः ॥१७६॥ 1
तथा शक्त्या रक्षयेयुः यशोमण्डितदिङ्मुखाः । एवं ग्रामे जनपदे नगरे वा विशेषतः ॥१७८॥
परस्परस्नेहभाजः प्राप्तभूपालसाहयकाः । वर्णाश्रमक्रियाशक्ताः लसन्तु क्ष्मातले भृशम् ॥१७९॥

इति काश्यपीयकृषिसुक्तौ शाकादिकृषिक्रमकथनं नाम द्वितीयो भागः ॥ 2

*

अथ भोज्याभोज्यक्रमकथनं नाम तृतीयो भागः ॥

काश्यप उपदिशति -

नृपाज्ञया चोदितास्तु ब्राम्हणाः क्षत्रिया विशः । अन्ये चापि यथाकालं सारक्षेत्रे विशेषतः ॥१॥
कृत्वा कृषिं बहुविधामेवं निर्दिष्टरीतितः । धान्यानां विविधानां च राशिमाढकराशिकम् ॥२॥
मरीचीसर्षपादीनां राशिं स्वग्रहमानयेत् । आतपे शोषयित्वा तान् यथाकालं यथाक्रमम् ॥३॥ 3
सज्जीकुर्युस्तु पाकाय प्रत्यहं देवतुष्टये । साध्वीभिः पाककार्यं तु कर्तव्यं देवशासनात् ॥४॥
देवानामतिथीनां च सत्कारः सफलो भवेत् । ततः प्रजारक्षणं च निश्चितं तु मुनीश्वरैः ॥५॥

1 तः 2 सू 3 गृ

धर्मविद्ब्राम्हणस्तस्मात् द्रव्याणां बहुरुपिणाम्। भोज्याभोज्यक्रमं ज्ञात्वा पाके साध्वीं नियोजयेत॥६॥ 1

पील्वन्नं कोद्रवान्नं च न देवब्राम्हणार्हकम्।शुभ्रं च श्वेतवार्ताकं लशुनं ग्रञ्जनं तथा॥७॥ 2

पलाण्डुं कवकं चैव निर्यासं च तथा क्रमम्। अभक्ष्यं च ब्राम्हणानां कुस्थलप्रभवानि च॥८॥

बृहत्कूश्माण्डकं वापि पन्नां शिग्रुं च पीलुकम्।वर्जयेत् ब्राम्हणस्तत्र चास्थलप्रभवं तथा॥९॥

पिपीलिकामक्षिकाद्यैः कृमिभिश्चापि यत् ग्रहोदूषितं तच्चान्नमुख्यं वर्जयेत् यत्नतो द्विजः॥१०॥ ॥10॥ 3

सारमेयैः कुक्कुटाद्यैः दुष्टमन्नं तथैवच। विश्वासहीनं दत्तं च दूषितं तु नखादिभिः॥११॥

तुषतन्त्वादिदुष्टं च द्विजोऽन्नं परिवर्जयेत्। मार्जारैर्दूषितं यच्च यदाघ्रातं च वेश्मनि॥१२॥

चुचुंदरीमूषकाद्यैः यच्चान्नाद्यं हि दूषितम्। तत्सर्वं वर्जयेद्यत्नात् ब्राम्हणस्तु विशेषतः॥१३॥

अन्नाद्यं नीचदुष्टं तु तथा घ्रातं तु वा क्वचित्। स्पृष्टं वा न तु भुञ्जीत श्रेयोऽर्थी सर्वतः क्षितौ॥१४॥

अशुद्धस्थलदत्तां च सर्वं तच्च विवर्जयेत्। कवलादवशिष्टं च यास्यात् पतितमेव च॥१५॥ 4

अभक्ष्यमाहुर्मुनयः यशसे क्षेमसिद्धये। अदत्तमतिथिभ्यश्च देवताभ्यो विशेषतः॥१६॥

अकालदत्तं च तथा यदन्नाद्यं ग्रहादिषु। अस्थले च तथा पक्वं जलेनाक्षालितं तथा॥१७॥ 5

अन्नं वा शाकराशिं वा भक्ष्यं वा खाद्यमेव च। अभक्ष्यमेव निर्दिष्टं ब्राम्हणानां विशेषतः॥१८॥

अकुलीनेन पक्वं च मलमूत्रादिदूषितम्। रोमादिदूषितं यच्च स्वेनादो भक्षितं तथा॥१९॥

अस्नातपक्वं च तथा वर्जयेत् भोजनादिकम्। हस्तदत्तं चापसव्यकरदत्तं च यत्तथा॥२०॥ ॥20॥

---

1 रू 2 गृ 3 गृ 4 त्तं 5 गृ

अयः खण्डेन दत्तं वा दारुखण्डकरण्डकैः । तथा पर्युषितं चान्नं वर्जयेत् द्विजसत्तमः ॥२१॥

गृहान्तरे तु यत् पक्कमानीतं स्वगृहं ततः । तच्चाभोज्यमिहादिष्टं मुनिभिः शास्त्रपारगैः ॥२२॥ 1

दध्यन्नं च तिलान्नं च रात्रौ भुञ्जीत नो द्विजः । चन्द्रिकाभोजनं चैव प्रदीपेन विवर्जिते ॥२३॥

स्थले च भोजनं तद्वत् भोजनं तमसि क्रमात् । निन्द्यमेतच्च निर्दिष्टं मुनीन्द्रैश्च सुरैरपि ॥२४॥

सफेनं च जलं तद्वत नद्यादेः प्रथमोदकम् । आकाशात् पतितं तोयं धारासलिलमेव च ॥२५॥

अस्पृश्यैः स्पृष्टतोयं च यत्नतो वर्जयेत् बुधः । उष्ट्रक्षीरं चैकशफक्षीरं द्विखुरजं तथा ॥२६॥

क्षीरं सलवणं तद्वत युवतिक्षीरमेव च । वत्सप्रहीनगोक्षीरं वत्सान्तरविनिस्रुतम् ॥(स्रु)॥ २७॥

गोक्षीरं च तथा लोके हयजाक्षीरं च दूषितम् । दुग्धं च ताम्रविन्यस्तं वर्ज्यं निन्द्यं च तद्विदुः ॥२८॥

अतस्तु श्रोत्रियो विप्रः धर्मवित् ब्राम्हसिध्दये । भोज्याभोज्यक्रमं ज्ञात्वा पाकं कुर्याद्यथाविधिः ॥२९॥ 2

क्षत्रियाणां च वैश्यानां शुद्राणामपि भूतले । नोक्तः स एष नियमो मुनिभिस्तत्त्वदर्शिभिः ॥३०॥ ॥३१॥ 3

मांसभोजनमप्येषां न दोषायेति निश्चितम् । ब्राम्हणाः क्षत्रियावैश्याः शूद्राश्चान्येऽपि भूतले ॥३१॥

भोज्याभोज्यक्रमं ज्ञात्वा देशाचारप्रमाणतः देवतायार्पितं पूर्वं भुञ्जन्तस्तदनन्तरम् ॥३२॥

धूतपापाश्च काशान्ते श्रद्दाभक्तिगुणोज्ज्वलाः । तस्मात्सर्वत्र देशेषु ब्राम्हणाः क्षत्रियास्तथा ॥३३॥

वैश्याश्च शुद्दद्रव्याणि तण्डुलादीनि नित्यशः । शाकद्रव्याण्यपि तथा पावनानि नवानि च ॥३४॥

जलं दुग्धं दधि घृतं नवनीतमथापि वा । तैलं च पत्रवर्गं च पात्राणि च यथाक्रमम् ॥३५॥

---

1 गृ  2 धि  3 शू

स्वयं वा स्वीयपत्नीभिः साध्वीभिः स्वस्ववेश्मनि । गोमयालिप्तभूभागे शुद्धां शुक्लीं च सेन्धनाम् ॥३६॥

पूजयित्वा विशेषेण भूमिं वासवमेव च । यमं चाग्निं च वरुणं ब्रम्हाणं च विशेषतः ॥३७॥

पाकं कृत्वा यथाकालं भाण्डैश्चापि घटादिकैः । ततः शुद्धस्थले स्थाप्य षड्रसादिसमुज्ज्वलम् ॥३८॥

भक्ष्यं भोज्यं च विविधं वटकादिकमेव च । पाकशास्त्रोक्तमार्गेण पक्वं तैलघृतादिभिः ॥३९॥

शर्कराद्यैर्गुर्नानाव्यञ्जनादिभिरन्वितम् । तेमनाश्चैश्च विविधैः सोपस्कारैर्विशेषतः॥४०॥ ॥40॥ [1]

पक्वं श्रद्धाप्रीतिपूर्वं यथाकालं यथाक्रम् । स्थापयेयुर्देवतार्चास्थले वेश्मनि वा पुनः ॥४१॥

पिटकादिषु भाण्डेषु पूरयेयुर्यथोचितम् । निवेदनाय देवानां तदेतच्छास्त्रचोदितम् ॥४२॥

इति काश्यपीयकृषिसूक्तौ भोज्याभोज्य क्रमकथनं नाम तृतीयो भागः ॥

---

1 दैर्गुडैर्ना

## अथ विविधहव्यनिवेदनक्रमकथनं नाम
## चतुर्थो भागः ॥

काश्यप उपदिशति -

पाकक्रिया तु द्विविधा नित्यनैमित्तिकक्रमात् । नित्यं तु नित्यं देवेशदृष्टिपातादि योग्यकम् ॥१॥

नैमित्तिकं च तद्वत्स्यात् पात्रभेदस्तु तत्र हि । देवार्हं भोज्यजालं तु हव्यमित्यभिधीयते ॥२॥

इदमेवातिथीनां च प्रजानां शास्त्रचोदितम् । भोज्यमित्येवमादिष्टं कव्यं पितृनिवेदितम् ॥३॥

तत्तु स्वबन्धुभिर्भोज्यं शास्त्रज्ञैः समुदीरितम् । देवेशरूपं विविधमादिष्टं पूजनार्हकम् ॥४॥ 1

शिवलिङ्गस्वरूपं च सालग्रामशिलात्मकम् । धातुर्विष्णोश्चावतारभेदं ज्ञात्वा द्विजोत्तमः ॥५॥ 2

क्षत्रियो वा वैश्यकश्च यथाशक्ति विधानतः । सान्ध्यं कर्म तु निर्वर्त्य देवपूजां प्रकल्पयेत् ॥६॥ 3

राजोपचारवत्तत्तु सकलं शास्त्रचोदितम् । गण्डूषाचमनाद्यं तत् स्नानवस्त्रादिधारणम् ॥७॥

भोज्यासनं प्रकल्प्याथ श्रद्धाभक्तिसमन्वितः । साध्वीभिः पक्वमन्नादिविविधं भोज्यमुत्तमम् ॥८॥

समर्पयेत् देवतृप्त्यै नानाव्यञ्जनशोभितम् । गुडान्नं पायसान्नं च तिलान्नं च तथैव च ॥९॥

दध्यन्नमथ मुद्गान्नं अपूपं वटकं तथा । गोधूमवटकं तद्वत् पोलिकां माजकामपि ॥१०॥ ॥ 10 ॥ 4

मोदकं शर्कराबन्दिद्राक्षैलादिसमन्वितम् । कुंकुमद्रव्यसंयुक्तं घनशर्करकान्वितम् ॥११॥

---

1 रू 2 रू 3 र्त्य 4 द्रा

पयोगलकबन्दी वा विचित्रान्नमथापि च । युक्त्या पाकक्रमप्राप्तं मधुरं कालयोग्यकम् ॥१२॥

माषतण्डुलसंमिश्रं लवणादिरसोज्ज्वलम् । डलं महाडलमपि पाकप्राप्तं घृतान्वितम् ॥१३॥

तदेव दहयन्वितं वा सघृतं च सशर्करम् । सुधारससमं पक्वं डलं च विविधाकृति ॥१४॥

शार्करं जालेपिकं वा मुद्गगोधूमसंयुतम् । सघृतं माषसंपन्नं अथवा तत्प्रकल्पयेत् ॥१५॥

मधुरं लवणं तद्वत् कटु तिक्तं तथाम्लकम् । क्वचित् तुवरकं वापि षड्रसं द्रव्यमीरितम् ॥१६॥

गोधूममाषमुद्गानां चणकानां च पिष्टकैः । डलादिभक्ष्यं विविधं खाद्यं पेयं तथा क्वचित् ॥१७॥

चर्व्यं च क्रमतः पक्वं रसनारुचिदायकम् । युक्त्या पक्वं यथाकालं तैले वाथ घृतेऽपि वा ॥१८॥

अन्नाद्यं तेमनाद्यं च तथातिरसमुख्यकम् । भक्ष्यं च विविधं पक्वं श्रद्धाभक्तिपुरःसरम् ॥१९॥

शुद्धद्रव्यैश्च संपक्वं नियमेन महानसे । ।तत्सर्वं भक्ष्यजालं भोज्यादि च यथाक्रमम् ॥२०॥॥२०॥

भोज्यासननिविष्टाय विष्णवेऽमिततेजसे ।देवार्चनक्रमाद्दत्त्या चार्पयित्वा द्विजोत्तमः॥२१॥

वीरवस्यां[1] समाप्याथ पुष्पगन्धानुलेपनैः । चामरव्यजनादीनां वीजनैः स्तुतिभिस्तथा ॥२२॥

राजोपचारवत्सर्वं देवार्चनमुदीरितम् । कल्पयित्वा विशेषेण नित्ये नैमित्तिके तथा ॥२३॥

समये भक्तिवाक्याद्यैः प्रणामादिभिरन्वहम् । तोषयित्वा जगन्नाथं प्रणीताभीष्टदायकम् ॥२४॥

शुद्धद्रव्यैः कृषिप्राप्तैः पक्वं प्रत्यहमादरात् । वासुदेवाय - कृष्णाय विष्णवे परमात्मने

ततस्त्वतिथिवर्गाय स्वकुटुंबाय च क्रमात् ॥२५॥

---

1 वरी

भोज्यमन्नं खाद्यवर्गमन्यत्पक्वं महानसे । विविधं षड्रसोपेतमात्मरक्षणहेतवे ॥२६॥

अर्पयेत् भोज्यपात्रेषु कदलीप्रमुखेषु च । भोजयित्वा विशेषेण प्रीतिपूर्वं द्विजोत्तमः ॥२७॥

सचूर्णं ताम्बूलं च दत्वा तेभ्यो यथाक्रमम् । एवं नृपाज्ञयालोके द्विजा धर्मविदां वराः ॥२८॥

देवयज्ञं भूतयज्ञं द्वयमत्र महीतले । धर्म्यं यशस्यमायुष्यं पालयेत् भक्तिपूर्वकम् ॥२९॥

कुटुम्बस्य नृपस्यापि राष्ट्रस्य च विशेषतः । क्षेमसिद्ध्यर्थमेवं हि कर्तव्यमिति शास्त्रतः ॥३०॥ ॥३०॥

सर्वलोकहितार्थाय काश्यपो मुनिरब्रवीत ॥

इति काश्यपमुनिविरचितायां काश्यपीय कृषिसूक्तौ विविधहव्यनिवेदनक्रम - कथनात्मकः चतुर्थो भागः ॥

---

समाप्ता चेयं काश्यपीयकृषिसूक्तिः ॥

-o-

गोब्राम्हणेभ्यः शुभमस्तु नित्यं

लोकाः समस्ताः सुखिनो भवन्तु ॥